# ब्रह्मामृतम् ।

श्रीपरमात्मने नमः ।

अविक्रियाय पूताय सत्ताय परमात्मने ।
श्रीकृष्णपरमाऽऽनन्दसन्दोहायाऽऽत्मने नमः ॥ १ ॥
यत्रेदं विश्वमखिलं गन्धर्वनगरोपमम् ।
भाति तत्परमं धाम वैशिकेन्द्राख्यमस्म्यहम् ॥ २ ॥
यद्वक्त्रचन्द्रस्मितचन्द्रिकांश-
मापीय शिष्या वयमाप्तकामाः ।
स्मो दक्षिणाशामुखसंज्ञकांस्तान्
नताः स्म सर्वेश्वरतीर्थपादान् ॥ ३ ॥
परमात्मसुखं प्रकट दिशतः
करमुद्रिकया चितिसञ्ज्ञिकया ।
वटमूलपदप्रख्याताननु तान्
प्रणमामि सदाशिवतीर्थगुरून् ॥ ४ ॥
यतिकुमुद्वतीचन्द्रसन्निभान्
श्रितपदाम्बुजान् शिष्यषट्पदैः ।
उपशमोन्नतान् बोधदान् सदा-
शिवगुरून् भजे बोधकौस्तुभान् ॥ ५ ॥
अर्धेन्दुचूडाऽपरविग्रहान् य-
दानन्दलेशेन विधीन्द्रमुख्याः ।
सुनिर्वृताः पङ्कजवक्त्रराम-
ब्रह्मेन्द्रपादानहमाश्रये तान् ॥ ६ ॥

आर्यैः कैश्चित् सर्वलिङ्गसंन्यासः क्रियते कथम् । इति पृष्टो यमी को ऽपि स्वाऽऽनन्दाऽऽस्वादलालसः ॥ ७ ॥ तूष्णीम्भूतो जगच्छून्यं पश्यन्नन्धवदात्मदृक् । निरन्तरं निर्विकल्पममाधिमगमत् स्फुटम् ॥ ८ ॥ कदा चित् परमाऽऽनन्दविश्रान्तेः स्वान्तउत्थिते । स्मृत्वा यतिवरैः पृष्टं मुनिना मननं कृतम् ॥ ९ ॥ अनेन ज्ञानिनः किं स्यात् कुर्याद्वासनया हि तत् । का वृद्धिः कः क्षयस्तस्य जीवन्मुक्तस्य तेन तु ॥ १० ॥ मुक्तेनोपलवत् स्थेयमित्येतदसमञ्जसम् । परन्तु द्वैतशान्त्यर्थं कर्तव्यं मननं ध्रुवम् ॥ ११ ॥ ब्रह्माऽऽत्मैकत्वविज्ञानात्सर्वद्वैते लयं गते । भूयो यत्नस्तत्कृते कस्तद्धेतुर्मननं कथम् ॥ १२ ॥ समाधौ न द्वैतदृष्टिर्व्यवहारे घटेत सा । जीवन्मुक्तिसुखं न स्याद् द्वैतदृष्ट्या ततो मयि ॥ १३ ॥ तद्विरोधिद्वैतशान्त्यै मनन ह्यनुवर्त्तते । चिद्वृत्त्यागमुत ज्ञात्वा ऽज्ञात्वा वा कृतवानयम् ॥ १४ ॥ आद्ये तं प्रति वक्ष्यामो ज्ञात्वा चैतदथ स्वयम् । एवं प्रश्नस्य तात्पर्यं वक्तुमारभते मुनिः ॥ १५ ॥ आत्मा ब्रह्माऽयमित्येवमुपदिष्टे महात्मभिः । श्रीसर्वेश्वरतीर्थार्यैः स्वत एव गतं जगत् ॥ १६ ॥ प्रकृत्या सह भूतानि भौतिकं च चराऽचरम् । स एकः पुंसि सूर्ये च स आत्मा तत्त्वमस्यपि ॥ १७ ॥ सूक्ष्मात्सूक्ष्मतरे नित्यं तत्त्वमेव त्वमेव तत् । प्रज्ञाप्रतिष्ठा प्रज्ञानं ब्रह्म त्वं तदसीति च ॥ १८ ॥ एष तआत्मा यत्साक्षान्नेह नाना ऽस्ति किं चन । ईशावास्यमिदं सर्वं चिन्मात्रो ऽहं सदाशिवः ॥ १९ ॥ तथा प्राणोस्मि प्रज्ञात्मा नो न वेदेति वेद चेत् । एवमादिमहावाक्यैरुपदिष्टे परात्मनि ॥ २० ॥ दृष्टे सर्वमिदं विश्वं नाऽऽसीदस्ति भविष्यति । प्रपञ्चोपशमं शान्तं शिवमद्वैतमिद्ययम् ॥ २१ ॥ श्रुत्वा विमुह्यते लोको गुरोर-

श्रद्धयैव सः । श्रद्धाभक्तिध्यानयोगादेवे हीति श्रुति बहु ॥२२॥
विश्वस्य दृश्यमात्रस्य त्यागेन ध्यायतः परम् । तत्त्वं महा-
ऽऽग्रहेणैव निष्प्रपञ्चपरात्मनः ॥ २३ ॥ आविर्भावं समुद्भूतम-
चिराद् गुर्वनुग्रहात् । तन्न जानाति मूढो ऽयं विषयाऽऽस-
क्तधीर्जनः ॥ २४ ॥ प्रबले प्रतिबन्धे ऽपि स्वधर्मत्वाद्धि न च्यु-
तिः । स्वधर्मे निधनं श्रेयः स्वधर्ममपि चेति वा ॥ २५ ॥
न हि कल्याणकृत्कश्चिदित्येवमवदद्धरिः । अत्रा ऽलसो यतिः
कश्चिद्धारणादिपराङ्मुखः ॥ २६ ॥ स्वाऽभीष्टमेव वदति न शा-
स्त्रोक्तं तदुच्यते । एका लिङ्गे यतीनां तु चतुर्गुणमिति स्मृ-
तेः ॥ २७ ॥ मृदादिभिर्घर्षयित्वा गुदं स्नानैः कलेवरम् । ब्र-
ह्मसौख्यं यत्र तत्र श्रवणं करवाण्यहम् ॥ २८ ॥ ब्रह्मज्ञं यो-
गिवर्यं च न याम्यालोकये ऽपि वा । ज्ञानं हि दुर्लभं लोके
साधनान्यपि तस्य च ॥ २९ ॥ अनुष्ठातुं न शक्यन्ते गतिः का
वा भविष्यति । तथापि कार्यं धर्मत्वाद्वेदान्तश्रवणं मया ॥३०॥
न च ध्यानं समाधिं वा दुष्करत्वात्करोम्यहम् । अन्ते गतिं
न जाने ऽहमिति चेन्मन्द वच्मि ते ॥ ३१ ॥ शूद्रयागसमो ध-
र्मस्तव स्याद्बहुयत्नतः । कुतः शमादिकं चैव त्यजतो नियत-
क्रियाः ॥ ३२ ॥ ते गतिं तु न जानामि प्रत्युक्तिस्तत्र दीयते ।
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ॥ ३३ ॥ असदि-
त्याह भगवान् देवकीनन्दनः स्वयम् । ब्रह्मसौख्यमतस्त्यक्त्वा
श्रद्धाशान्त्यादिसंयुतः ॥ ३४ ॥ श्रवणं मननं ध्यानं समाधिं
ज्ञानसिद्धये । कुर्यादतन्द्रितश्चैवमाहतुश्च श्रुतिस्मृती ॥ ३५ ॥
तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यं चरन्तः ।
परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः
कृतेन । तद्विज्ञानार्थं स गुरुमेवाऽभिगच्छेत् समित्पाणिः श्रो-

त्रियं ब्रह्मनिष्ठम् ॥ ३६ ॥ तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमाऽन्विताय । येनाऽक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ ३७ ॥ शान्तैरनन्यमतिभिर्मधुरस्वभावैरेकत्वनिश्चितमनोभिरपेतमोहैः । सार्द्धं वनेषु परमार्थपदस्वरूपं शास्त्रेषु सम्यगनिशं विमृशन्ति धीराः ॥ ३८ ॥ मुञ्चन्नङ्ग तदङ्गसङ्गमनिशं त्वामेव सञ्चिन्तयन् सन्तः सन्ति यतो यतो गतमदास्तानाश्रमानावसन् । नित्यं तन्मुखपङ्कजाद्विगलितत्वत्पुण्यगाथाऽमृतस्रोतःस्रोतसि संप्लुतो नरहरे न स्यामहं देहभृत् ॥ ३९ ॥ ते सन्तस्तानि तीर्थानि स गुरुः सा च देवता । प्रसीदति यदभ्यासैः शरदीवोदकं मनः ॥ ४० ॥ तस्मात्प्रकृत्या लोको ऽयं विष्णोर्मायाविमोहितः । यथा रुचिस्तथा तिष्ठेत् किं छिन्नं तेन मे चितः ॥ ४१ ॥ नैवास्ति वस्तुतो दृश्यं प्रतीतिः सापि मा ऽस्त्विति । स्थितः स्थाणोर्महेशस्य समाधौ निकटे सति ॥ ४२ ॥ सदेवेत्यादिवाक्यार्थब्रह्मस्मरणपूर्वकम् । स्वे महिम्नि स्थितेनैव यद् दृष्टं योगनिद्रया ॥ ४३ ॥ वितण्डाजल्पवादोक्तिप्रसङ्गाऽनुप्रसक्तितः । भक्तिवैतृष्ण्यविज्ञानजीवन्मुक्तिफलोदयम् ॥ ४४ ॥ वर्ण्यते तदशेषेण यथावृत्तं मया ऽधुना । अद्वितीयं परानन्दं ध्यायन्तं मौनिनं प्रति ॥ ४५ ॥ पप्रच्छ हैतुकः कश्चिदीशाऽनुग्रहवर्जितः । नन्वणुव्योमकालानां वर्तनं मानतो भवेत् ॥४६॥ न्यायोपबृंहितं तच्च मानानां प्रबलं मतम् । दौर्बल्यमितरेषां हि तद्विरोधे हि दृश्यते ॥ ४७ ॥ मन्यते ऽतो ऽद्वैत आत्मा शिष्येतेति भवान् खलु । श्रुत्याभासैकशरणो भीतो ऽन्यस्यापि दर्शने ॥ ४८ ॥ तस्मादकोविदो नेत्रे सुखभ्रान्त्या निमीलति । हितं वक्ष्यामि ते सो ऽहं नैयायिकशिरोमणिः ॥ ४९ ॥ दुःख-

ध्वंसाय यत्नः स्यान्मुक्तिस्ते नाऽन्यथा भवेत् । मानादीनां प-
दार्थानां न्यायोक्तानां विचारणात् ॥ ५० ॥ ईश्वराऽनुग्र-
हेणैव ज्ञानान्मोक्षो भवेत्तत्र । संक्षेपेण जगत्सृष्टिप्रलयौ व-
र्णयाम्यहम् ॥ ५१ ॥ नित्याश्चतुर्विधाः सूक्ष्मा अणवः पार्थि-
वादयः । तत्र द्वयोर्द्वयोरण्वोः क्रिया स्यादीश्वरेच्छया ॥ ५२ ॥
द्वयोर्द्वयोस्तु संयोगः क्रियया जायते ततः । द्व्यणुके तु म-
हत्त्वं स्याद् त्र्यणुकत्रित्वसङ्ख्यया ॥ ५३ ॥ न क्वापि पारिमा-
ण्डल्यं परिमाणे तु कारणम् । पारिमाण्डल्यभिन्ना ये पर-
माणुगता गुणाः ॥ ५४ ॥ आरभन्ते सजातीयान् गुणान्
त्र्यणुकसंश्रयान् । द्व्यणुकादिक्रमेणैव जायते परमेश्वरात् ॥ ५५ ॥
महती भूर्महत्तोयं महत्तेजो महाऽनिलः । एवं ब्रह्माण्डमखिलं
प्राणिनां भोगसिद्धये ॥ ५६ ॥ भोगप्रदाऽदृष्टनाशाज्जगतः
प्रलयो भवेत् । ईशस्य सञ्जिहीर्षातो द्वयोरण्वोः क्रिया भवे-
त् ॥ ५७ ॥ तया विभागे सञ्जाते संयोगो नश्यते तयोः ।
तेन द्व्यणुकनाशःस्यात्तन्नाशे त्र्यणुकस्य च ॥ ५८ ॥ एवं प-
णाड्या क्षित्यादि सर्वं कार्यं विनश्यति । स्थितिकाले प्र-
पञ्चस्य सदसद्योनिजन्मसु ॥ ५९ ॥ जीवेषु दुःखितेष्वेकः स्व-
कर्माऽऽराधितेश्वरात् । पदार्थतत्त्वज्ञानेन मुच्यते भवबन्ध-
नात् ॥ ६० ॥ दुःखजन्मप्रवृत्तीनामुत्तरोत्तरनाशतः । अपवर्गो
भवेद् ज्ञानादित्येवं गौतमोऽब्रवीत् ॥ ६१ ॥ त्वमेव मोक्षसिद्ध्य-
र्थमुत्तिष्ठोत्तिष्ठ भो यते । तस्मात्परं ब्रह्ममात्रं परिशिष्टमिति भ्र-
म. ॥ ६२ ॥ इति प्रबोधितो योगी परमानन्दवारिधौ । समाधौ ली-
नचित्तः स ईषदुन्मील्य लोचने ॥ ६३ ॥ अपश्यत्तं सुखाकृष्टो
निद्रया ऽऽकृष्टबालवत् । किं चित् प्रोच्य स्वाऽक्षिणी
तु निमील्य स्तम्भवत् स्थितः ॥ ६४ ॥ पुनः पुनः समाधातुं गते

तस्मिन् स दुर्मतिः । शिक्षार्थं पाणिना पाणिं गृहीत्वा ऽऽक्रुष्टवान्यतिम् ॥ ६५ ॥ चुकोप शप्तुमुद्युक्तः सहसा धृतिमान् हृदि । शापं ददौ च कोपाय भस्मीभूतो भवेति सः ॥ ६६ ॥ अहो बत महापापी पूर्वशत्रुरिहाऽऽगतः । नष्टश्च विप्रियं तेन कृत स्म रहसि स्वयम् ॥ ६७ ॥ काम एष क्रोध एष रजोगुणसमुद्भवः । महाशनो महापाप्मा विद्धयेनमिह वैरिणम् ॥ ६८ ॥ धूमेनाऽऽव्रियते वन्हिर्यथा ऽऽदर्शो मलेन च । यथोल्बेनावृतेत्यादिदुष्पूरेणाऽनलेन च ॥ ६९ ॥ त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत् ॥ ७० ॥ एवं कोपकृतं स्मृत्वा विप्रियं योगिराट् पुनः । तच्छान्त्युपायमधुना स्मरते सुखदं महत् ॥ ७१ ॥ क्रुद्ध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् । सप्तद्वारविकीर्णांश्च न वाचमनृतां वदेत् ॥ ७२ ॥ नमोस्तु तुभ्यं कोपाय स्वाऽऽश्रयज्वालिने भृशम् । कोप्यस्य मम वैराग्यदायिने दोषबोधिने॥७३॥ अपराधिनि कोपश्चेत्कोपे कोपः कथं न जायेत । धर्मार्थकाममोक्षप्राणयशोहारिणि स्वैरे ॥ ७४ ॥ सततसुलभदैन्ये निःसुखे जीवलोके यदि मम परिवादात् प्रीतिमाप्नोति कश्चित् । परिवदतु यथेष्टं मत्समक्षं तिरो वा जगति हि बहुदुःखे दुर्लभः प्रीतियोगः ॥ ७५ ॥

सुबालोपनिषदि—“ महत्पदं ज्ञात्वा वृक्षमूले वसेत्कुचैलो ऽसहाय एकाकी समाधिस्थ आत्मकामो निष्कामो जीर्णकामो वृक्ष इव तिष्ठासेत् छिद्यमानो न कुप्येत न कम्पेतोपलमिव तिष्ठासेच्छिद्यमानो न कुप्येत न कम्पेत आकाशमिव तिष्ठासेच्छिद्यमानो न कुप्येत न कम्पेत सत्येन तिष्ठासेत्” । भिक्षूपनिषदि—“सर्वसहाः सर्वसमाः समालोष्टाऽश्म-

काञ्चना:" । परमहंसोपनिषदि—"कामक्रोधलोभमोहहर्षाऽसूयाऽहङ्कारादींश्च हित्वा स्ववपुः कुणपमिव दृश्यते" । आरुणिकोपनिषदि—" कामक्रोधलोभमोहहर्षाऽसूयाऽहङ्कारादींश्च हित्वा" । स्मृतिश्च—

"क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः । स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति" ॥ ७६ ॥

" क्रुद्धो हन्याद् गुरूनपि" इति च ।

देहः किमन्नदातुर्वा निषेक्तुर्मातुरेव वा । मातुः पितुर्वा क्रेतुर्वा बलिनोऽग्नेः शुनोऽपि वा ॥ ७७ ॥ एवं साधारणं देहमव्यक्तप्रभवाप्ययम् । को विद्वानात्मसात्कृत्य हन्ति जन्तूनृते ऽसतः ॥ ७८ ॥ तापत्रयेणाऽभिहतं यदैतदखिलं जगत् । तदा शोच्येषु भूतेषु द्वेषं प्राज्ञः करोति क ॥७९॥ अथ भद्राणि भूतानि हीनशक्तिरहं परम् । मुदं तथापि कुर्वीत हानिर्द्वेषफलं यतः ॥ ८० ॥ बद्धवैराणि भूतानि द्वेषं कुर्वन्ति चेत्ततः । शोच्यान्यहो ऽतिमोहेन व्याप्तानीति मनीषिणाम् ॥ ८१ ॥ इति सञ्चिन्त्य सर्वात्मा ह्यागत शापकारणात । कोपं तत्याज येनाऽयं संसारः परिवर्त्तते ॥ ८२ ॥ नष्टसंसारिणो मेपि ह्याभासो ह्वयं गतः । याज्ञवल्क्यादिवत्कार्यं न मां कारयितुं क्षमः ॥८३॥ शापो विदग्धशाकल्ये याज्ञवल्क्यस्य धीमत. । यथा तथा तवाप्यस्तु कोयं कं शपसे वद ॥ ८४ ॥ आरब्धकर्मनानात्वाद् ज्ञानिनामन्यथा ऽन्यथा । वर्त्तनं हैतुके तस्मिन् शापो ऽयं न प्रवर्त्तते ॥ ८५ ॥ याज्ञवल्क्यस्य शाकल्ये शापस्तत्कर्मणा ऽभवत् । एवं चेत् पापसंश्लेषो मैवमश्लेषसंश्रयात् ॥८६॥ एष नित्यो महिमा ब्राह्मणस्य न वर्द्धते कर्मणा नो कनीयान् । तस्यैव स्यात् पदवित्तं विदित्वा नलिप्यते कर्मणा पापकेन ॥ ८७ ॥ इति ।

"प्रतर्दनो ह वा इन्द्रस्य प्रियं धामोपजगाम त्रिशीर्षाणं त्वाष्ट्रमहनम् । अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छत्तमेकेन चर्मणा लोमो मीयते न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया एव मां यो वेद न तस्य केन च कर्मणा लोमो मीयते न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया तद्यथा पुष्करपलाशमापो न श्लिष्यन्तएवमेवंविदि पापं कर्म न श्लिष्यते"। "तदुन्तरपूर्वाऽघयोरश्लेषविनाशौ तद्दर्शनात्"।

तेन मोहो न कर्तव्यः शास्त्रं मानं मनीषिभिः । पश्यन्नुपनिषद्दृष्ट्या ज्ञानिनां स्थितिमुत्तमाम् ॥ ८८ ॥ प्रायेण वर्तनं तेषां यथाशास्त्रं च कस्य चित् । कोपादिकं भवेल्लोकरक्षार्थं पूत एव सः ॥ ८९ ॥ किं मद्यसेवया तस्य ब्रह्महत्यादिना च किम् । यस्य चित्तं परे लीनं शुद्धे ब्रह्मण्यभेदतः ॥ ९० ॥ ब्रह्मैव तत्त्वविच्छुद्धस्तत्त्वविद्ब्रह्म तत्परम् । व्योमवत्पूर्वभावेन तिष्ठते मोदते सदा ॥ ९१ ॥ अन्यद्यद्यस्ति तज्ज्ञात्मा नास्ति चेन्नरशृङ्गवत् । प्रतीतिमात्रं मायैव स्वाप्नमायापदार्थवत् ॥ ९२ ॥ एवंद्रष्टुः कुत्र पापं पुण्यं वा नरकोऽपि वा । ब्रह्मादिलोको नास्त्येव सर्वं भ्रान्तेन कल्पितम् ॥ ९३ ॥ तद्भ्रान्तिनाशेनोत्पन्नं न नष्टं नाऽपि च स्थितम् । व्योम्नि नैल्यस्य सम्बन्धमन्धाः पश्यन्ति नेतरे ॥ ९४ ॥ तद्वद्ब्रह्मविदं भ्रान्ताः पश्येयुस्तांस्तु को रुदेत् । अश्रद्दधानाः शास्त्रेषु गुरौ विष्णौ परात्मनि ॥ ९५ ॥ प्रपञ्चं न विदुर्घोरमन्धैर्नीताऽन्धवद्भृशम् । भवकूपे पतन्सन्ना अहो कष्टमिति स्थितिः ॥ ९६ ॥ तस्मादलं प्रसङ्गेन भवशेषमुखे स्थितम् । विमोक्तुकामस्तं वीक्ष्य तस्य पापमचिन्तयत् ॥ ९७ ॥ त्यजन् वेदान्ततात्पर्यं

वेदमार्गस्य कण्टकः ॥ ९८ ॥ स्मृतिपान्थान् भवाऽर्केण तप्तां-श्छत्रादिवर्जितान् । भीत्या शिथिलकौपीनानन्नपानादिक-र्षितान् ॥९९॥ साधून् मुक्तग्रहान् शान्तान् निगमाऽरण्यगान् भयात् । भेदवादिमृगादिभ्य स्मरतो गुरुपादुके ॥१००॥ मन्त्रांस्तदुपदिष्टांश्च तुदन्नाशीविषोपमः । स्थितो भूयो ऽपि मन्दात्मा विघ्नकृद्येन चालिताः ॥१०१॥ मुनयोपि कृतात्मानो विश्रान्तेस्तमसा किमु । यदि न्यायरुचेस्तस्य पापं चिन्त-यसे तदा ॥१०२॥ केषां चिद्ब्रह्मनिष्ठानां कथं तर्कादिपाठ-नम् । तर्कादिषु रतिस्तेषां लोकदृष्ट्या न तु स्वतः ॥ १०३ ॥ प्रारब्धादीश्वरायत्तादवस्थानमतर्कितम् । अथ वा कृतकृत्यो-पि लोकाऽनुग्रहकाम्यया ॥ १०४ ॥ शास्त्रीयेणैव मार्गेण वर्त्ते ऽहं का मम क्षतिः । सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवान-पि ॥ १०५ ॥ प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्य-ति । गुणा गुणेषु वर्त्तन्तइति मत्वा न सज्जते ॥ १०६ ॥ ज-नकादेः कथं राज्यमिति चेद् दृढबोधतः । तथा तवापि चेत्तर्कं पठ यद्वा कृषिं कुरु ॥ १०७ ॥ निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च । द्रष्टारश्चेत्कल्पयन्ति किं मे स्यादन्यकल्प-नात् ॥१०८॥ समाधिमथ कर्माणि मा करोतु करोतु वा । हृद-येनाऽस्तसर्वाऽऽस्थो मुक्त एव न संशयः ॥१०९॥ देवाऽर्चनस्नान-शौचभिक्षादौ वर्त्ततां पुनः । तारं जपतु वा तद्वत्पठत्वाम्नायम-स्तकम् ॥११०॥ विष्णुं ध्यायतु धीर्यद्वा ब्रह्माऽऽनन्दे विलीयताम् । साक्ष्यहं किञ्चिदप्यत्र न कुर्वे नापि कारये ॥१११॥ मुमुक्षुः स-र्ववेदान्तश्रवणादिपरो भवेत् । तर्कादिशास्त्रपठनं वर्जये-च्छ्रुतिशासनात् ॥ ११२ ॥ अनन्यप्रोक्ते गतिरत्र नास्त्यणी-यानिह तर्कमणुप्रमाणात् । नैषा तर्केण मतिरापनेया प्रोक्ता

ऽन्येनैव सुज्ञानाय प्रेष्ठ ॥ ११३ ॥ स्मृतिश्च—

अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् । नाऽप्रतिष्ठिततर्केण गम्भीराऽर्थस्य निश्चयः । प्रकृतिभ्यः पर यच्च तदचिन्त्यस्य लक्षणम् ॥ ११४ ॥

"तर्काऽप्रतिष्ठाना"दिति च ।

बुद्ध्यारोहाय तर्कश्चेदपेक्षेत तथा सति । स्वाऽनुभूत्यनुसारेण तर्क्यतां मा कुतर्कताम् ॥ ११५ ॥ स्वाऽनुभूतावविश्वासे तर्कस्याप्यव्यवस्थितेः । कथं वा तार्किकंमन्यस्तत्त्वनिश्चयमाप्नुयात् ॥ ११६ ॥ तस्मात्किञ्चिन्न वक्तव्यमात्मज्ञानात्मरूपतः । यद्युच्यते तदा स्वस्मिन्नापतेत्परमप्रियम् ॥ ११७ ॥ एवं पापं तार्किकस्य चिन्तयित्वा भवाम्बुधेः । भवपारं तारयितुं दीनमेवं विचिन्वते ॥ ११८ ॥ योगिने भगवान् कृष्ण आविरासीत्स्वलंकृतः । स दूरागमनं वीक्ष्य तुलसीवायुना ऽश्रुमुक् ॥ ११९ ॥ सुखवारां निधौ मग्नो पपात धरणीतले । हरिः पद्मपलाशाभ्यां पाणिभ्यां भक्तवश्यताम् ॥ १२० ॥ प्रकुटीकर्तुमालिङ्ग्य वक्त्रं चाऽऽघ्राय भूरिशः । मुनिं स्वाऽङ्के समारोप्य मेघगम्भीरया गिरा ॥ १२१ ॥ पप्रच्छ पुत्र दास्यामि सर्वान् कामान् यथेप्सितान् । सर्वमेतन्न जानाति भक्तः पाषाणवत् स्थितः ॥ १२२ ॥ शङ्खं दध्मावपि हरिस्तं बोधयितुमक्षमः । संसारस्मारणेनैव प्रबोधयति मायति ॥ १२३ ॥ शब्दस्पर्शादयो दिव्या नृत्यगीतादयस्तथा । मत्प्रसादाद् भविष्यन्ति भोगार्थं भुवि दुर्लभाः ॥ १२४ ॥ भुक्त्वा तानद्य विमलानुत्तिष्ठोत्तिष्ठ भो यते । स तु प्रबुद्धः सहसा पलायन् भववार्त्तया ॥ १२५ ॥ उड्डीयोड्डीय कुल्या-

दीन् लङ्घयन् याति योगिराट् । अग्रतः पृष्ठतो ऽपीशो दया-
लुस्तं वनाद् वनम् ॥ १२६ ॥ अन्वगाद्विस्मितो भो भो कृष्णो
ऽहं तव देवता । इति भूयो वदन् वाणीं कौशेयं च प्रदर्श-
यन् ॥ १२७ ॥ श्रुत्वा तां मधुरां पश्चात् दृष्ट्वा कनकवास-
सम् । अभ्यधावत्पदाऽम्भोजमभिषिञ्चयाऽश्रुवारिभिः ॥१२८॥
पीत्वा पावनमस्यर्थं शूद्रस्तुष्यति सर्वदा । गङ्गोदकस्थं रथ्या-
म्बु जगत्पावयति क्षणात् ॥ १२९ ॥ साक्षाद्भगवतः पादस-
रोजात्किं पुनः स्रुतम् । भवदुःखाऽम्बुधेः पारमहमेव परः पुमा-
न् । पुरुषान्न परं किं चित्सा काष्ठेत्यवदद्धरिः ॥ १३० ॥
इन्द्रनीलनवनीरदच्छविं पद्मसम्भवसुरेन्द्रविभाव्यम् । मल्लिका-
मुकुलराजिभिर्वृतं नौमि पुष्पशरमानमर्दकम् ॥ १३१ ॥ का-
लधूमजतमालभास्वरं कामविद्रिडपराङ्गमीश्वरम् । कामिता-
र्थदपदाम्बुजयुग्मं कंसविद्विषमुपास्महे वयम् ॥ १३२ ॥ गो-
पगोगणचकोरकदम्बैः पीयमानवदनाऽमृतरश्मिम् । वक्रकु-
न्तलविलोलशिखण्डं कलभगामिनमाकलये हरिम् ॥ १३३ ॥
कुमुदनीलतनुद्युतिधिक्कृतद्युमणिकान्तिकदम्बकमार्यम् । ज-
गति वस्तु किमप्यतिभासुरं त्वदितरन्न भवानहमस्मि
किम् ॥ १३४ ॥ लावण्यसीमा कमला ऽङ्गनासु श्रीरामचन्द्रो
ऽधिकसुन्दरेषु । एतद् द्वयं तन्मिलितं तवाङ्गे को वा पुमान् व-
र्णयितुं समर्थः ॥ १३५ ॥ तथापि मे बालकभाषणं ते जग-
त्पितुः प्रीणनमातनोति । त्वं तुल्यनिन्दास्तुतिरीश्वरोपि वि-
श्वस्य रक्षार्थमिदं गृणीहि ॥ १३६ ॥ यो मे पुरा संसृतिशृ-
ङ्खलौघं संछिद्य कर्णे प्रणवं दिदेश । प्लुतं च सार्धं परिरभ्य
दोर्भ्यां स्वप्ने समां रक्षतु शेषशायी ॥ १३७ ॥ तदनु कनक-
मूर्तिः स्वात्मतत्त्वाऽवबोधात् प्रचलितमनसो मे कैश्चिदाश्च-

ङ्कितस्य । सपदि दिविजगन्धस्रग्विभूषाविभूषे घननिनद-
निनादैः स्वप्नगो गायति स्म ॥ १३८ ॥ विद्युच्चैलो नटवर-
वपुः श्रोत्रयोः कर्णिकारी मुष्णन् गोप्या दधि मधु पयः शि-
क्यभाण्डस्थमश्नन् । स्तोकान्योसौ स्वयमपि तथा भोजयन्ना-
गताया स्तद्गण्डूषैर्नयनयुगले पूरयन् विह्नुतस्तान् ॥ १३९ ॥ श-
क्रातिथ्यं शिखरिवपुषा भक्षयन्तं रुषं यो मेघैर्घोरैर्भजति वरुणे
गोकुले व्याकुले च । धृत्वा शैल करजलरुहे लीलया सप्तरात्र
गोष्ठं रक्षन् नतसुरपतिर्धेनुभिः पूजितस्तु ॥ १४० ॥ एवं लो-
कान् रक्षसे त्वं भक्तानर्भकलीलया । ज्ञानिनो ब्रह्मरूपेण वै-
ष्णान् विद्धि दूरस्वरूपतः ॥ १४१ ॥ नीलनीरजसङ्काशः कर्णाल-
म्बितकेसरः । मणिकुण्डलगण्डाभो विद्रुमाऽधरपल्लवः ॥१४२॥
मन्दस्मितमुखाऽम्भोजच्युतसारप्रदः श्रियै । वनमालां कौस्तु-
भादिकान्त्या संस्पर्द्धयन् मुदा ॥ १४३ ॥ वेणुगानमिषेणैक
मामपाङ्गेन वीक्षयन् । करेणैकेन कालीयपुच्छन् गृह्णन् पदाम्बुज-
म् ॥१४४॥ उद्धृत्य दक्षिणं सव्यपादाङ्गुष्ठेन पञ्चके । फणानां
रत्नदीपैश्च नीराजितपदाम्बुजः ॥ १४५ ॥ नागस्त्रीभिरधस्तात्तु
देवगन्धर्वकिन्नरैः । उपरिष्टाद्विमानस्थैः कोटिचन्द्रोपमै-
र्वृतः ॥१४६॥ वितानमिव कुर्वद्भिर्विमानं पुण्डरीकवत् । आन-
तास्यैः करे रत्नमुक्ताफलविभूषितैः ॥१४७॥ सिद्धैर्विमानसम्ब-
द्धैरिव मौक्तिकमण्डितैः । भेरीदुन्दुभिघोषाद्यैर्गोपगोपीभिर-
र्चितः । ननर्त च परानन्दो यो गोपालः स मे गतिः ॥ १४८ ॥
इति स्तुतस्तु भगवान् मुनिना बहु पूजितः । कुच्छ्रात्त स्व-
यमालिङ्ग्य वैकुण्ठभुवनं ययौ ॥१४९॥ गते तु तस्मिन् गोविन्दे
स्मृत्वा स्मृत्वा च तद्दयाम् । मोदस्तं तार्किकं दृष्ट्वा ह्युद्धर्त्तुं स-
मचिन्तयत् ॥ १५० ॥ विना ज्ञानेन नोद्धारो ज्ञानं च श्रव-

णादिकम् । श्रवणादिः साधनानां चतुष्कं न विना भवेत् ॥१५१॥ साधनानाञ्च संपत्तिश्चित्तशुद्धिं विना न सा । अनुष्ठानादृते नित्यकर्मादेर्नैव सम्भवेत् ॥ १५२ ॥

"तमेतं वेदाऽनुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन । तपांसि सर्वाणि च यद्वदन्ति" ।

तपसा कल्मषं हन्ति ततो ज्ञानं प्रवर्त्तते । कर्मणैव हि संसिद्धिमास्थिता जनकादयः ॥ १५३ ॥ योगिनः कर्मकुर्वन्ति सङ्गं त्यक्त्वा ऽऽत्मशुद्धये । कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५४ ॥ अत आदौ कर्मभेदाश्चित्तशुद्ध्यै निरूप्यते । विहितं प्रतिषिद्धं च द्विविधं कर्म तूच्यते ॥ १५५ ॥ विहितं त्रिविधं नित्यं काम्यं नैमित्तिकं मतम् । यावज्जीवमग्निहोत्रं जुहुयादिति चोदना ॥ १५६ ॥ नित्यं विधत्ते ऽग्निहोत्रमुपरागे निमज्जनम् । नैमित्तिकं तूपरागे स्नायादित्यादिचोदितम् ॥१५७॥ स्वर्गकामो यजेतेति चोदना काम्यकर्मणः । काम्याऽनुष्ठानतः स्वर्गमनित्यफलमाप्नुयुः ॥ १५८ ॥ अतः काम्यं परित्यज्य नित्यनैमित्तिकक्रिये । ईश्वराऽर्पणबुद्ध्यैव ह्यनुतिष्ठन् सदा भवेत् ॥ १५९ ॥ न हन्तव्यो ब्राह्मणस्तु निषिद्धं कर्म वर्जयेत् । स चित्तशुद्धिं लभते चित्तपापक्षयात्मिकाम् ॥ १६० ॥ नित्याऽनित्यविवेको ऽयं चित्तशुद्ध्या नृणां भवेत् । कार्यत्वाद्धिमतं सर्वमनित्यमिति तूच्यते ॥ १६१ ॥ जन्म बाल्यं ततः सर्वो जन्तुः प्राप्नोति यौवनम् । अव्याहतैव भवति ततो ऽनुदिवसं जरा ॥ १६२ ॥ ततश्च मृत्युमभ्येति जन्तुर्देहेश्वरात्मजाः । प्रत्यक्षं दृश्यते चैतदस्माकं भवतां तथा ॥ १६३ ॥ मृतस्य च पुनर्जन्म भवत्येतच्च नाऽन्यथा । आगमोय विना तच्च नोपादानं विनोद्भवः ॥१६४॥ गर्भवासादि यावत्तु पुनर्ज-

न्मोपपादनम् । समस्ताऽवस्थक तावद् दुःखमेवाऽवगम्यते ॥१६५॥ एवं सर्वाणि भूतानि जायन्ते च मुहुर्मुहुः । विनश्यति तथाऽण्ड च नामरूपं चराऽचरम् ॥ १६६ ॥ सर्वे लोका अनित्याः स्युर्दृश्यत्वाच्च घटादिवत् । दृश्यं यत्तदनित्यं स्याल्लोकादेश्या-स्तथा सति ॥ १६७ ॥ अनित्या स्युस्तआत्मा तु नित्य आ-नन्दचिद्वपुः । यद्यनित्यस्तदा नाशः स्यात्कृतस्याऽकृतस्य च ॥ १६८ ॥ एवमभ्यागमश्च स्याद्विरोधः स्यात्तदा श्रुतेः । निरुपाधिप्रेमदृष्टेः सुखमस्याप्तमित्यतः ॥ १६९ ॥ परामर्शा-त्परानन्दरूपश्चैतन्यविग्रहः । तद्भिन्नत्वे जडत्वं स्यात् तथाऽनित्यत्वमापतेत् ॥ १७० ॥ नित्याऽनित्यविवेके तु विषये दोषदर्शनात् । ब्रह्मलोकान्तभोगेषु वैराग्यं लभते चिरम् । अतोऽह श्रावयाम्येतं दोषं वैराग्यकारणम् ॥ १७१ ॥

श्रुतिः—"भगवन्नस्थिचर्मस्नायुमज्जामांसशुक्रशोणितश्ले-ष्माऽश्रुदूषिते विण्मूत्रवातपित्तसंघाते दुर्गन्धे ऽस्मिन् शरीरे किं कामोपभोगैरिति" । "शरीरमिदं मैथुनादेवोद्भूतं संविद्यपेतं निरय एव मूत्रद्वारेण निष्क्रान्तमस्थि-भिश्चितं मांसेनाऽनुलिप्तं चर्मणा ऽवबद्धं विण्मूत्रपि-त्तकफमज्जामेदोवसादिभिरन्यैश्च मलैर्बहुभिः परिपूर्णं कोश इव वसुने"ति । "न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति, न वा ऽरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति, न वा ऽरे पुत्राणां कामाय पुत्रा. प्रिया भवन्ति आत्मनस्तु कामाय पुत्राः प्रिया भवन्ति, न वा ऽरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति, न वा ऽरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय

सर्वं प्रियं भवति" । स्मृतिः—

"अस्थिस्थूणं स्नायुबद्धं मांसशोणितलेपितम् । चर्माऽवनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ॥१७२॥ जराशोकसमाविष्टं रोगायतनमातुरम् । रजस्वलमनित्यं च भूतावासमिमं त्यजेत्" ॥१७३॥ मांसाऽसृक्पूयविण्मूत्रस्नायुमज्जाऽस्थिसंहतौ । देहे चेत् प्रीतिमान् मूढो भविता नरके ऽपि सः ॥ १७४ ॥ सा कालसूत्रपदवी सा महाऽवीचिवागुरा । सा ऽसिपत्रवनश्रेणी देहे ऽहमिति या स्थितिः ॥१७५॥ सा त्याज्या सर्वयत्नेन सर्वनाशे ऽप्युपस्थिते । स्प्रष्टव्या सा न भव्येन सश्वमांसेव पुल्कसी॥१७६॥ त्वङ्मांसरुधिरस्नायुमेदोमज्जाऽस्थिसंहतौ । विण्मूत्रपूये रमतां क्रिमीणां कियदन्तरम् ॥ १७७ ॥ चर्मखण्डं द्विधा च्छिन्नमपानोद्गारधूपितम् । ये रमन्ति नमस्तेभ्यः साहसं किमतः परम् ॥ १७८ ॥ त्वङ्मांसरक्तबाष्पाम्बु पृथक् कृत्वा विलोचने । समालोकय रम्यं चेत्किं मुधा परिमुह्यसि ॥ १७९ ॥ विदन्ति मर्त्याः प्रायेण विषयान् पदमापदाम् । अथापि भुञ्जते कृष्ण तत्कथं श्वखराऽजवत् ॥ १८० ॥ श्रीभगवानुवाच । अहमित्यन्यथाबुद्धिः प्रमत्तस्य यदा हृदि । उत्सर्पति रजो घोरं ततो वैकारिकं मनः ॥ १८१ ॥ रजोयुक्तस्य तमसः सङ्कल्पः सविकल्पकः । ततः कामो गुणध्यानाद् दुर्धरः स्याद्धि दुर्मतेः ॥ १८२ ॥ करोति कामवशगः कर्माण्यविजितेन्द्रियः । दुःखोदर्काणि संपश्यन् रजोवेगविमोहितः ॥ १८३ ॥ अहो मे पश्यतः पापमल्पपुण्यस्य दुर्मतेः । अतृप्तस्याऽकृतार्थस्य ग्रहस्त्रैवर्गिको हतः ॥ १८४ ॥ अनुकूला ऽनुरूपा च यस्य मे पतिदेवता । शून्ये गृहे मां सन्त्यज्य पुत्रैः स्वर्याति साधुभिः ॥१८५॥ सो ऽहं शून्ये गृहे किं नु मृतदारो मृतप्रजाः । जिजीविषे

किमर्थं वा विधुरो दुःखपीडितः ॥१८६॥ तांस्तु तत्राऽऽहृतान् स-
द्भिर्मृत्युग्रस्तान्विचेतसः । स्वयं च कृपणो भिक्षुः पश्यन्नप्यबुधो
ऽपतत् ॥ १८७ ॥ एवं कुटुम्ब्यशान्तात्मा द्वन्द्वारामः पवित्रव-
त् । पुष्णन् कुटुम्बं कृपणः साऽनुबन्धो ऽवसीदति ॥ १८८ ॥
यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम् । गृहेषु खगवत्सक्त-
स्तमारूढच्युतं विदुः ॥ १८९ ॥ दृष्ट्वा स्त्रियं देवमायां तद्भावै-
रजितेन्द्रियः । प्रलोभितः पतत्यन्धे तमस्यग्नौ पतङ्गवत् ॥१९०॥
योषिद्धिरण्याऽऽभरणाऽम्बरादिद्रव्येषु मायारचितेषु मूढः ।
प्रलोभितात्मा ह्युपभोगबुद्ध्या पतङ्गवन्नश्यति नष्टदृष्टिः ॥१९१॥
योगिनो योगविभ्रंशः सङ्गतः सम्भवेदिति । सर्वथा तन्निवृत्त्य-
र्थमैलगीतं वितन्यते ॥ १९२ ॥ सङ्गं न कुर्यादसतः शिश्नो-
दरभृतः क्वचित् । तस्याऽनुगः पतत्यन्धे तमस्यन्धाऽनुगाऽन्ध-
वत् ॥ १९३ ॥ अहो मे मोहविस्तारः कामकश्मलचेतसः ।
देव्या गृहीतकण्ठस्य स्नायुखण्डा इमे स्मृताः ॥१९४॥ नाऽहं
वेदाऽभिनिर्मुक्तः सूर्यो वाऽभ्युदितो मुधा । मिषतो वर्षपू-
गाणां बताऽहानि गतान्युत ॥ १९५ ॥ अहो मे आत्म-
संमोहो येनात्मा योषितां कृतः । क्रीडामृगश्चक्रवर्ती नरदेव-
शिखामणिः ॥ १९६ ॥ सपरिच्छदमात्मानं हित्वा तृणमिवे-
श्वरम् । यान्तीं स्त्रियं चाऽन्वगमं नग्न उन्मत्तवद्रुदन् ॥ १९७ ॥
कुतस्तस्याऽनुभावः स्यात्तेज ईशित्वमेव वा । यो ऽन्वगच्छं
स्त्रियं यान्तीं खरवत्पादताडितः ॥ १९८ ॥ किं विद्यया किं
तपसा किं दानेन श्रुतेन वा । किं विविक्तेन मौनेन स्त्रीभिर्यस्य
मनो हृतम् ॥ १९९ ॥ पिबतो वर्षपूगान्मे ऊर्वश्या अधरा-
ऽऽसवम् । न तृप्यत्यात्मभूः कामो वह्निराहुतिभिर्यथा ॥२००॥
न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्ण-

वर्त्मेव भूय एवाऽभिवर्धते ॥ २०१ ॥ यत्पृथिव्यां व्रीहि-
यवं हिरण्यं पशवः स्त्रियः । नाऽलमेकस्य तत्सर्वमिति मत्वा
शमं व्रजेत् ॥ २०२ ॥ पुंश्चल्या ऽपहृतं चित्तं को
ऽन्यो मोचयितुं प्रभुः । आत्मारामेश्वरमृते भगवन्तमधो-
क्षजम् ॥ २०३ ॥ काममाश्रित्य दुष्पूरं दम्भमानमदाऽन्विताः ।
मोहाद् गृहीत्वा ऽसद्ग्राहान् प्रवर्त्तन्ते ऽशुचिव्रताः ॥ २०४ ॥ चि-
न्तामपरिमेयां च प्रलयान्तामुपाश्रिताः । क्षिपाम्यजस्रमशु-
भानासुरीष्वेव योनिषु ॥ २०५ ॥ आसुरीं योनिमापन्ना मू-
ढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय ततो या-
न्त्यधमां गतिम् ॥ २०६ ॥ ततो विरक्तो भोगेभ्यः शान्ति-
दान्त्यादिमान्भवेत् । अन्तरिन्द्रियचित्तस्य विषयेभ्यो निव-
र्तनम् ॥२०७॥ शान्तिरित्युच्यते सद्भिः वैराग्यं तस्य कारणम् ।
श्रोत्रादेरिन्द्रियस्यापि विषयेभ्यो ऽथ वारणम् ॥ २०८ ॥ दम
इत्युच्यते सद्भिः शान्तिस्तस्यैव कारणम् । अनन्तरश्चोपरतिः
पारहंस्याऽभिधा भवेत् ॥ २०९ ॥ सैव ज्ञानस्य हेतुः स्यात्सं
न्यासो ऽन्यो न कारणम् । सजतैव हि तद्धेयं त्यक्तुः प्रत्यक्
परं पदम् ॥ २१० ॥

वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शु-
द्धसत्त्वाः । शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा
ऽऽत्मन्येवाऽऽत्मानं पश्येत् । त्यागेनैके अमृतत्वमानशुः । न्यास
एवात्यरेचयत् तस्मान्न्यासमेषां तमसामतिरिक्तमाहुः । न्यास
इति ब्रह्म ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि
तपांसि संन्यासे न विधीयन्ते । न त्रिदण्ड्यादिसंन्यासः । ननु

नोपतिष्ठेत यः पूर्वां नोपास्ते यस्तु पश्चिमाम् । स शूद्रवद्बहि-
ष्कार्य इत्यादिश्रुतिशासनात् ॥ २११ ॥ शिखोपवीतत्यागी च

ब्राह्मणः पतितो भवेत् । तस्मात्त्रिदण्डसंन्यासः श्रुत्युक्तो नाऽन्य इत्यसत् ॥ २१२ ॥ सशिखं वपनं कृत्वा बहिः सूत्रं त्यजेद्बुधः । अग्नेरिव शिखा नाऽन्या यस्य ज्ञानमयी शिखा । स शिखीत्युच्यते विद्वानितरे केशधारिणः ॥ २१३ ॥

अथ परिव्राड् विवर्णवासा मुण्डो ऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति । तत्र परमहंसा नाम संवर्त्ताऽऽरुणिश्वेतकेतुदुर्वासोरुभुनिदाघजडभरतदत्तात्रेयप्रभृतय अव्यक्तलिङ्गा अव्यक्ताऽऽचारा उन्मत्ता उन्मत्तवदाचरन्तः । त्रिदण्डं कमण्डलुं शिक्यं पात्रं पवित्रं जलपवित्रं शिखां यज्ञोपवितं चेत्येतत् सर्वं भूः स्वाहेत्यप्सु परित्यज्य आत्मानमन्विच्छेत् । यथाजातरूपधरो निर्द्वन्द्वो निष्परिग्रहस्तत्त्वब्रह्ममार्गे सम्यक् संपन्नः शुद्धमानसः प्राणसंधारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन् उदुम्बरपात्रेण लाभाऽलाभसमो भूत्वा शून्याऽगारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाऽग्निहोत्रगृहनदीपुलिनगिरिगह्वरकन्दरकोटरनिर्जनस्थण्डिलेष्वनिकेतवानप्रयत्नो निर्ममः शुक्लध्यानपरायणो ऽध्यात्मनिष्ठः शुभाऽशुभकर्मनिर्मूलनपरः संन्यासेन देहत्यागं करोति स परमहंसो नामेति ।

बहिःसूत्रं त्यजेद्विद्वान् योगमुत्तममास्थितः । ब्रह्मभावमिदं सूत्रं धारयेद्यः सचेतनः ॥ २१४ ॥ धारणात्तस्य सूत्रस्य नोच्छिष्टो नाऽशुचिर्भवेत् । सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् । ते वै सूत्रधरा लोके ते च यज्ञोपवीतिनः ॥ २१५ ॥ ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः । ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ॥ २१६ ॥

अयज्ञोपवीती कथं ब्राह्मणः स्यात् इदमेवाऽस्य तद्यज्ञोपवीतं य आत्मा ।

वाग्दण्डः कर्मदण्डश्च मनोदण्डश्च ते त्रयः। यस्यैते नियता दण्डाः स त्रिदण्डी महामति.॥२१७॥ तस्मात् शिखादित्यागोपि श्रुतिस्मृत्यादिचोदितः। यावज्जीवमग्निहोत्रं जुहुयादिति चोदना॥२१८॥ यावज्जीवं दर्शपूर्णमासाभ्यामिति च श्रुतिः। वीरहा वा एष इति जरामर्यादिगीस्तथा ॥ २१९ ॥ दृश्यते ऽतस्तद्विरोधाच्छिखादित्यागबोधकम् । अतः परं ततो न्यास· परहंसो न विद्यते ॥ २२० ॥ तेनाऽविरक्तविषयाः श्रुतयस्त्वदुदाहृता· । नाऽन्धपङ्ग्वादिविषया संन्यासश्रुतयस्तव ॥ २२१ ॥ तन्नाऽविशेषश्रवणाद् गृहाद्वेति श्रुतेस्तथा । कर्माऽनधिकृतां पुंसां पृथग् न्यासविधिश्रुतेः ॥ २२२ ॥ अथ पुनरव्रतीति प्रभृत्याद्याः श्रुताः श्रुतौ । तस्मात्कर्मस्वधिकृतां परहंसो विधीयते ॥ २२३ ॥ अस्मिन्पुरुषधौरेय. संन्यासे विकृतो भवेत् । सो ऽयं पुरुषधौरेयो ह्यद्वेष्ट्रेत्यादिकर्मवान् ॥ २२४ ॥ अव्यक्तलिङ्गा इत्यत्र श्रुतं लिङ्गादिवर्जनम्। परहंसयतेस्तच्च कथं विविदिषोर्भवेत् ॥ २२५ ॥ परहंसयतेरात्मश्रवणाद्यधिकारिण. । व्यक्तलिङ्गस्य तस्यैव श्रवणाद्यधिकारिता ॥ २२६ ॥ तथैवाऽव्यक्तलिङ्गस्य शुकादेरधिकारिता। जनकस्याऽन्तिके ब्रह्मविचारे श्रूयते खलु॥२२७॥ तत्रादौ व्यासपुत्रस्तु स्वयं शास्त्रं महामति· । ज्ञात्वा सामान्यतो ब्रह्मसंशयाऽऽविष्टमानस· ॥ २२८ ॥ पितुः समीपं संप्राप्य श्रुत्वा तत्रापि संशयात् । पश्चादासाद्य निकटं जनकस्य गृहं प्रति ॥ २२९ ॥ स्थितं विदेहराजेन द्वारपालेन वेदिते । ज्ञात्वा विविदुषं ह्येनं पौष्कल्यं साधनस्य तु ॥ २३० ॥ शोधयित्वा ऽवमानैस्तमानीयाऽन्त पुरे च तम् । संमाननैश्च योषिद्भिर्ज्ञात्वा मुख्याऽधिकारिताम् ॥ २३१ ॥ उपदिश्य ब्रह्मविद्यां शुकं विगतसंशयम्। उक्तं ब्रह्माऽपरोक्षेण ज्ञातं ब्रह्म त्वया ऽनघ॥२३२॥

अभावाच्चित्तविश्रान्तेश्चित्तं त्वां क्षोभयत्यलम् । तेन यत्नं कुरु ब्रह्मन् तद्विश्रान्त्यै समाधिना ॥ २३३ ॥ इत्युक्तः सो ऽपि तं प्राह जनकं देशिकं प्रति । यथा ऽयं स्वविकल्पोत्थः स्वविकल्पपरिक्षयात् । क्षीयते दग्धसंसारो निःसार इतिनिश्चयः ॥ २३४ ॥ एवमुक्त्वा गुरोराज्ञां गृहीत्वा ब्रह्मविन्महान् । समाध्यर्थं गत इति प्रसिद्धिर्भारते तथा ॥ २३५ ॥

श्रीदुर्वासःसमीपेपि यतयो भूरिशः श्रुताः । व्यक्तलिङ्गाऽव्यक्तलिङ्गा वेदान्तश्रवणे रताः ॥ २३६ ॥ तर्कनिश्चिततत्त्वार्थज्ञाननिर्मलचेतसः । हंसाः परमहंसाश्च शिष्या दुर्वाससः प्रभोः ॥ २३७ ॥ नन्वयुक्तमलिङ्गत्वं दण्डादेर्विहितत्वतः । परित्यागो ऽन्यथा व्यर्थो विधिः स्यात्तत्प्रमापकः ॥ २३८ ॥ मैवं मन्दाधिकाराणां विधिस्तत्प्रापको भवेत् । तीव्रवैराग्ययुक्तानां मुख्यानामधिकारिणाम् । न दण्डादेर्ग्रहस्तस्य न मुख्यो ऽस्ति श्रुतेर्वशात् ॥२३९॥ न चैतत्सिद्धविषयं साधकस्तत्परिग्रहात् । इति वाक्यं वाक्यशेषे ध्यात्वाऽऽदौ श्रूयते विधिः ॥२४०॥ विधेर्न सिद्धो विषयो विश्रान्तहृदयो महान् । विरक्तो ब्रह्मजिज्ञासुः साधको विषयो विधेः ॥ २४१ ॥ तथापि विदुषो ब्रह्म यदिच्छेदिति वाक्यतः । श्रूयते परहंसस्य दण्डादेरपरिग्रहः ॥ २४२ ॥ अशक्तस्य तदन्यस्य दण्डादेश्च परिग्रहः । एकदण्डत्वतच्छून्यबोधकाऽनेकवाक्यतः ॥ २४३ ॥ परहंसे दण्डवस्त्रस्वीकारो ऽतो विकल्प्यते । एवं सिद्धे च स्मृतिषु श्रवणादिविधौ स्मृतः ॥ २४४ ॥ आच्छादनादिनियमो वस्त्रवत्येव युज्यते । सङ्कोचयेत्तं नियमं यदिच्छेदिति वेदगीः ॥ २४५ ॥ विना वस्त्राद्दृतिं शान्तिं पठित्वा श्रवणादिकम् । भवेद्दिग्वाससो ऽप्येवं महद्भिः प्रतिपादितम् ॥ २४६ ॥

स्वाहेत्यप्सु वस्त्रं कटिसूत्रमपि विसृज्य सर्वकर्मनिवृत्तः को ऽहमिति स्मृत्वा यथाजातरूपधरो भूत्वा स्वरूपाऽनुसन्धानपूर्वकमूर्ध्वबाहुरुदीचीं दिशं गच्छेत् पूर्वसंन्यासिगुरोः प्रणवमहावाक्यपञ्चीकरणोपदेशं प्राप्य यथासुखं विहरन्नित्याद्याः।

एवं विभागे संसिद्धे खिद्यन्ते ते वृथा जनाः। एतेनेदं कथं ग्रन्थान् पठेद्वा पाठयेत च ॥ २४७ ॥ वस्त्रेणाच्छाद्यानखाग्रमानाभि शृणुयादिति। स्मर्यते घटवस्त्रादेस्त्यागे शौचादिलोपतः ॥ २४८ ॥ एवमादि वचस्तेषां परास्तं न्यायवर्त्तिनाम्। किंचाऽयं बाह्यशौचादौ प्रष्टव्यः श्रद्धया ऽन्वितः ॥ २४९ ॥ शौचे परमहंसानां बाह्यं मुख्यं न वा ऽग्रिमः। न युज्यते कृते तस्मिन् शरीरं नैव शुध्यति ॥ २५० ॥ पूर्णो विण्मूत्ररुधिरैर्मांसमेदोऽस्थिसंहतः। श्लेष्मादिभिश्च यो रोमकूपे क्रिमिभिरावृतः ॥ २५१ ॥ यद्दुर्गन्धेन गव्यूतिर्विष्वग्गन्तुं न शक्यते तमात्मत्वेन मत्वा यः पवित्रीकर्त्तुमिच्छति ॥ २५२ ॥ उत्सहेता ऽपि विष्ठां च शुद्धं कर्त्तुमलं हि सः। उदाजह्रुः प्रमाणानि तज्जुगुप्सां कलेवरे ॥ २५३ ॥ मलमूत्रभाण्डमेतद्गात्रमहोरात्रमत्र दृष्ट्वापि। गोत्रकुलसूत्रवादी नेत्रविहीनो न सन्देहः ॥ २५४ ॥ अमेध्यपूर्णे क्रिमिजालसंकुलमतीव दुर्गन्धमशौचमध्रुवम्। कलेवरं मूत्रपुरीषभाजनं रमन्ति मूढा न रमन्ति पण्डिताः ॥ २५५ ॥ नवच्छिद्रकृता देहाः स्रवन्ति घटिका इव। बाह्यशौचैर्न शुध्यन्ति नाऽन्त.शौचं च विद्यते ॥ २५६ ॥ अहं ममेति विण्मूत्रलेपगन्धादिमोचनम्। शुद्धशौचमिति प्रोक्तं मृज्जलाभ्यां तु लौकिकम्। शौचात्स्वाऽङ्गजुगुप्सेति दृष्टं फलमसूत्रयत् ॥ २५७ ॥ क्व शरीरमशेषाणां श्लेष्मादीनां महाचयः। क्व चाऽङ्गशोभासौरभ्यकमनीयादयो गुणाः ॥ २५८ ॥ स्व-

देहाऽशुचिगन्धेन न विरज्येत यः पुमान् । विरागकारणं तस्य किमन्यदुपदिश्यताम् ॥ २५९ ॥ परहंसाऽऽश्रमस्थस्य स्नानादेरविधानतः । अशेषचित्तवृत्तीनां त्यागं केवलमाचरेत् ॥ २६० ॥ स्नानं त्रिषवणं प्रोक्तं बहूदकवनस्थयोः । हंसे तु सकृदेव स्यात् परहंसे न विद्यते ॥ २६१ ॥ अयाचितं यथालाभं भोजनाऽऽच्छादनं भवेत् । परेच्छया च दिग्वासाः स्नानं कुर्यात्परेच्छया ॥ २६२ ॥ न स्नानं न जपः पूजा न होमो नैव साधनम् । नाऽग्निकार्यादिकार्यं च तस्यास्ति हि महेश्वरि । परहंसयतेः स्नानं नास्तीति श्रुतिराह च ॥ २६३ ॥

परमहंसस्य मानसस्नानं तुरीयाऽतीतस्य भस्मस्नानमवधूतस्य वायव्यस्नानमूर्ध्वपुण्ड्रं त्रिपुण्ड्रं हंसस्य भस्मोद्धूलनं परमहंसस्य तुर्याऽतीतस्य न तिलकं न पुण्ड्रमवधूतस्य न किञ्चन ।

पुमान् सेवेत सततं न नित्यानियमान् बुधः । यमान् पतत्यकुर्वाणो नियमान् केवलान् भजन् ॥ २६४ ॥ पतति नियमवान् यमेष्वसक्तो न तु यमवान् नियमाऽलसो ऽवसीदेत् । इति यमनियमौ समीक्ष्य बुद्ध्या यमबहुलेष्वनुसंदधीत बुद्धिम् ॥ २६५ ॥ मनोनिग्रहशौचस्य नोत्सहे गदितुं फलम् । इति शास्त्रोक्तशौचे तु ह्यश्रद्धालव आग्रहात् ॥ २६६ ॥ अमुख्येनैव बाह्येन शुध्यन्त्वन्ये बहिर्मुखाः । प्रत्यङ्मुखानां शौचं तु मुख्यमान्तरमिष्यते ॥ २६७ ॥ अभ्यासिनो बाह्यशौचमशुद्धस्यापि युज्यते । अरत्निमात्रमुत्सृज्य कुर्याच्छौचमनुद्धृतैः ॥ २६८ ॥ पश्चात्तु शोधयेत्तीरमन्यथा त्वशुचिर्भवेत् । वापीकूपतटाकेषु नाऽऽहरेद्बाह्यमृत्तिकाम् । अरत्निमात्रादन्तःस्थात्पङ्कादप्याहरेन्मृदम् ॥ २६९ ॥ तस्मादव्यक्तलिङ्गानां यतीनां श्रवणादिषु । वैधेष्वस्त्यधिकारित्वमुत्तरत्रापि वक्ष्यते ॥ २७० ॥ त्यक्तसर्वेषणस्याऽस्य

शरीरस्थितिसिद्धये । द्रव्यादिसङ्ग्रहे प्राप्ते भिक्षा ऽभिक्षा-र्नियम्यते ॥२७१॥ सा भिक्षा पञ्चधा प्रोक्ता तत्रापि नियमो ऽपरः । शरीरस्थितिनिर्वाहमात्रमन्नादिभक्षणम् ॥ २७२ ॥ न तु क्षीरघृताऽपूपफलदध्यादिभक्षणम्। रेतोवृद्धिकरं ह्येतद् ज्ञान-निष्ठाऽपहारकम् ॥ २७३ ॥ अतस्तु वर्जनं तेषां प्रयत्नेन नि-यम्यते । रसादिवर्जनेनाऽन्नं परिव्राजः श्रुतिर्जगौ ॥ २७४ ॥

स्वव्यतिरिक्तं सर्वं त्यक्त्वा मधुकरवृत्त्या ऽहारमाहरन् कृशो भूत्वा मेदोवृद्धिमकुर्वन्नाज्यं रुधिरमिव त्यजेदेकत्राऽन्नं पलाहा-रमिव गन्धलेपनमशुद्धलेपनमिव क्षारमन्त्यजमिव वस्त्रमुच्छिष्टपा-त्रमिवाऽभ्यङ्गं स्त्रीसङ्गमिवोष्णोदकं मूत्रमिव शवपिण्डमिवैकत्रा-ऽन्नमिति ।

शब्दादीन् विषयान् त्यक्त्वा रागद्वेषौ व्युदस्य च। एतद्गी-ताभाष्यकारा मिष्टान्नस्य विवर्जनम्। श्रीमदानन्दगिरयः प्राहुर-र्थविचक्षणाः ॥ २७५ ॥ किं चाऽन्यद्धर्मशास्त्रेषु यतिधर्माऽव-भासकान् । श्लोकान् संग्राहके ग्रन्थे विश्वेशस्मृतिनामके। प्रोक्तो ऽयमर्थो विद्वद्भिरादर्तव्यो महात्मभिः ॥ २७६ ॥ हितं मितं तदश्नीयाद्यत्सुखेनैव जीर्यति । धातु प्रकुप्यते येन तदन्नं वर्जयेद्यति. ॥ २७७ ॥ नाट्यानां प्रेक्षणं द्यूतं प्रमदाः सुहृदस्तथा। भक्ष्यं भोज्यमुदक्यां च नैव पश्येत्कदा चन ॥ २७८ ॥ रसस्या-ऽनर्थहेतुत्वमब्रवीद् भगवानपि। जिव्हया ऽतिप्रमाथिन्या जनो रसविमोहितः । मृत्युमिच्छत्यसद्बुद्धिर्मीनस्तु बडिशैर्य-था ॥ २७९ ॥ इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः। व-र्जयित्वा तु रसनं निरन्नस्य विवर्धते ॥२८०॥ तावज्जितेन्द्रियो न स्याद् विजिताऽन्येन्द्रियः पुमान् । न जयेद्रसनं यावज्जितं सर्वं जिते रसे ॥ २८१ ॥ सक्तव्यं चेद्रसोपेतमन्नं देहस्थितिः

कथम् । इत्थं कृष्णोक्तरीत्यैव देहस्य स्थितिरिष्यते ॥ २८२ ॥ सुखमैन्द्रियकं राजन् स्वर्गो नरक एव च । देहिनः स्याद्यथा दुःखं तस्मान्नेच्छेत्तु तद्बुधः ॥ २८३ ॥ शयीताऽहानि भूरीणि निराहारो ऽनुपक्रमः । यदि नोपनमेद्ग्रासो महाहिरिव दिष्टभुक् । किं शयीताऽपि बलवानोमित्याह हरिः स्वयम् ॥ २८४ ॥ ग्रास सुमृष्टं विरसं महान्तं स्तोकमेव वा । यदृच्छयैवाऽऽपतितं ग्रसेदागतमस्पृहः ॥२८५॥ ओजस्सहोबलयुतं बिभ्रद्देहमकर्मकम् । शयानो वीतनिद्रश्च नेहेतेन्द्रियवानपि ॥ २८६ ॥ यो मे गर्भगतस्यापि वृत्तिं कल्पितवान् प्रभुः । शेषवृत्तिविधानाय किं सुप्तः सो ऽथ वा मृतः ॥ २८७ ॥ न शक्यते तथा स्थातुमिति चेत्प्राणधारणम् । अभ्यनुज्ञातमाम्नायवाक्येन क्रियतां भवान् ॥२८८॥ तोयमात्रात्प्राणमात्रं तिष्ठन्नपिबतश्श्रुतेः । अशक्तश्चेत्कणैस्साकं पिबेदम्बूनि भूरिशः ॥ २८९ ॥ फलपत्रोदकाहारः पर्वतादिष्विति श्रुतेः । कणानि तानि चाऽन्यानि स्मृतौ प्रोक्तानि योगिभिः ॥ २९० ॥ भैक्षं यवागुं तक्रं वा कणापिण्याकसक्तवः । त्वङ्मूलपत्रपुष्पाणि कणा यवकमित्यपि ॥ २९१ ॥ एवमादि स्मृतिततीः संस्मृत्यैवं समूचिरे । इत्ये ते वै शुभाऽऽहारा योगिनां सिद्धिदायकाः ॥ २९२ ॥ मातर्लक्ष्मि भजस्व कं चिदपरं मत्काङ्क्षिणी मा स्मभूर्भोगेषु स्पृहयालवो न हि वयं का निःस्पृहाणामसि । सद्यःस्यूतपलाशपत्रपुटिकापात्रे पवित्रीकृते भिक्षासक्तुभिरेव संप्रति वयं वृत्तिं समीहामहे ॥ २९३ ॥ नन्वेतेष्वेकमाश्रित्याऽवस्थातुं नैव शक्यते । अशक्तेन मया ब्रह्माप्निति चेदथ वा शृणु । नात्यश्नतस्तु योगो ऽस्तीत्यत्र भाष्यकृदब्रवीत् ॥ २९४

"तस्माद्योगी नात्मसम्मितादन्नादधिकं तथा न्यूनं वे"ति । एवमानन्दगिर्याचार्यैरुदीरितम् । 'आत्मसंमितमन्नमष्टौ ग्रासा"इत्यादि ।

अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशाऽरण्यवासिनः । द्वात्रिंशत्तु गृहस्थस्य यथेष्टं ब्रह्मचारिणः ॥ २९५ ॥ अर्द्धं सव्यञ्जनाऽन्नस्य तृतीयमुदकस्य च । वायोः संचरणार्थं च चतुर्थमवशेषयेत् ॥ २९६ ॥ पूरयेदशनेनाऽर्द्धं तृतीयमुदकेन तु । वायोः संचरणार्थाय चतुर्थमवशेषयेत् ॥२९७॥ अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया । जोषयेत सदा भोज्यं ग्रासमागतमस्पृहः ॥ २९८ ॥ माधूकरमथैकान्नं परहंसः समाचरेत् । अशक्तः प्राक्प्रणीतादौ शक्त आद्येन वर्तयेत् ॥ २९९ ॥ माधूकरं चरेद्भैक्षं करपात्रं तदुत्तमम् । तदुत्कृष्टं फलाहारः सर्वोत्कृष्टं तु गोमुखम् ॥ ३०० ॥ गौतमः पाणिपात्रस्य विशेषं प्राऽब्रवीन्मुनिः । हविः प्राश्य तथा ऽऽचम्य निराहारो भवेद् गृही ॥ ३०१ ॥ प्राश्याऽऽचम्य तथा भिक्षुर्निराहारो गृहे गृहे । पात्रमत्र भवेत्पाणिस्तेन नित्यं गृहानटेत् ॥ ३०२ ॥ पाणिपात्रं चरन्योगी नाऽसकृद् भैक्षमाचरेत् । तिष्ठन् भुञ्जयाचरन् भुञ्ज्याद् मध्ये नाऽऽचमनं तथा ॥ ३०३ ॥ आस्येन तु यदा ऽऽहारं गोवन्मृगयते मुनिः । तदा समः स्यात्सर्वेषु सो ऽमृतत्वाय कल्पते ॥ ३०४ ॥ एतेषां सर्ववाक्यानां मूलभूतश्रुतौ तथा । स्फुटीकृतो ऽयं नियमः कर्त्तव्यो ऽथ मनीषिभिः ॥३०५॥

कुटीचकस्यैकत्र भिक्षा, बहूदकस्याऽक्लृप्तमधूकरं, हंसस्य अष्टगृहेषु अष्टकवलं, परमहंसस्य पञ्चगृहेषु करपात्रं फलाहारं, गोमुखं तुर्याऽतीतस्य, अन्नाहारी चेत् गृहत्रये, अवधूतस्याऽजगरवृत्तिः सर्ववर्णेषु, यतिर्नैकत्र वसेत्, न कस्यापि नमेत्,

देशिकस्यापि न नमेत् । तुर्याऽतीताऽवधूतयोर्न ज्येष्ठो, यो न स्वरूपज्ञः स ज्येष्ठो ऽपि कनिष्ठः । आत्मानमेवं ध्यात्वा ऽनपेक्षमाणः प्राचीमुदीचीं वा दिशं प्रव्रजेत् चतुर्षु वर्णेषु भैक्षचर्यां चरेत्, पाणिपात्रेणाऽशनं कुर्यादौषधवदशनमाचरेत्, अश्नीयात्प्राणसन्धारणार्थं तथा यथा मेदोवृद्धिर्न जायते, कृशो भूत्वा ग्रामे एकरात्रं नगरे पञ्चरात्रं चतुरो मासान् ग्रामे वा नगरे वा ऽपि वसेत्। पक्षा वै मासा इति द्वौ वा वसेत् । विशीर्णखण्डवस्त्रं वल्कलं वा प्रतिगृह्य नाऽन्यत्प्रतिगृह्णीयात् । यदा ऽशक्तो भवति वर्षासु ध्रुवशीलो ऽष्टौ मासानेकाकी यतिश्चरेद्, द्वावेवाऽऽचरेद् द्वावेवाचरेत् । यतयो भिक्षार्थं ग्रामं प्रविशन्ति पाणिपात्रमुदुम्बरपात्रं वा गेहे गेहे विशेत्कवलमात्रेण नाऽपरं गृह्णीयात्, पदे पदे भुञ्जन् गच्छेत् ।

अथाऽयं ज्ञानिविषय इति चेदितरस्य तु । अष्टौ ग्रासा मुनेर्भक्ष्या इति शास्त्रान्मुनिर्यतिः ॥ ३०६ ॥ सर्वत्रेश्वरबुद्ध्यापि भक्षयेत्कवलाष्टकम् । किं चाऽऽरुणिश्रुतिरपि विधाय साधकान्प्रति ॥ ३०७ ॥ संन्यासं श्रवणाद्यर्थं द्वावेवेसब्रवीत्ततः । पाणिपात्रादिक वक्ति तेनाऽज्ञस्य च चोदितम् ॥ ३०८ ॥ भैक्षे प्रसक्तो हि यतिर्विषयेष्वपि सज्जते । भक्षणान्मलिने चित्ते मलाद्रागो हि वर्धते ॥ ३०९ ॥ रागात्क्रोधादयो दृष्टास्तद्वतां ज्ञानवार्त्तया । अलं तेषां तु विज्ञानं दूरे दूरे पलायते ॥३१०॥ गृहिभिर्ब्रह्मविद्बुद्ध्या भक्ष्यभोज्यैस्तु पूजितः । अज्ञो ऽयं नरकं याति श्रुतिरप्येवमाह हि ॥ ३११ ॥ तितिक्षाज्ञानवैराग्यशमादिगुणवर्जितः । भिक्षामात्रेण यो जीवेत्स पापी यतिवृत्तिहा ॥ ३१२ ॥ स याति नरकान् घोरान् महारौरवसंज्ञकान् । आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः ॥ ३१३ ॥

स्मृतिं लभेत सर्वासां ग्रन्थीनां विप्रमोक्षनः । सहस्रतारं नभसः पतित्वा वा न संभवि ॥ ३१४ ॥ ज्ञान तु चित्तशुद्ध्या स्यात् सा च लङ्घनशनादिभिः । अलमेतद्विचारेण प्रकृतं वर्णयाम्यहम् ॥ ३१५ ॥ तितिक्षा द्वन्द्वसहन श्रद्धा वेदगुरूक्तिषु । निगृहीतस्य चित्तस्य प्रसक्प्रावराग्यमुच्यते ॥ ३१६ ॥ समाधान मुमुक्षा च कैवल्यैच्छा भवेत्ततः । प्रसक्यगूब्रह्मैक्यजिज्ञासा विचारे कारणं भवेत् ॥ ३१७ ॥ अनन्तरं ब्रह्मनिष्ठं श्रोत्रियं विजितेन्द्रियम् । जीवन्मुक्तं कारुणिक परहंसधुरन्धरम् ॥ ३१८ ॥ उपगच्छेत्समित्पाणिर्यथाशास्त्रमतन्द्रितः । तस्मै योग्याय शिष्याय गुरुः कारुणिकोत्तमः ॥ ३१९ ॥ जीवाऽभेदब्रह्मविद्यां प्रब्रूयात्सद्भिरादृताम् । श्रुत्वा गुरुमुखाच्छिष्य आत्मनो ब्रह्मरूपताम् ॥ ३२० ॥ अयुक्तां मन्यमानस्तां गुरुं पृच्छति सादरम् । भगवन् श्रीगुरो विष्णो ब्रह्मात्मैक्यं कथं भवेत् ॥३२१॥ संसार्यहमससारि ब्रह्मैक्यं स्यात्कथ तयोः । किं चाऽन्यद्वादिनां जीवे विवादो दृश्यते महान् ॥ ३२२ ॥ अहं मनुष्य इत्येव प्रतीतिः सर्वजन्तुषु । सत्त्वाच्छरीरमेवाऽऽत्मा तस्यैक्यं ब्रह्मणा कथम् ॥ ३२३ ॥ मैव देहो मम स्थूल इत्येवं भेददर्शनात् । कृतहानादिदोषाच्च भिन्न आत्मा ततो भवेत् ॥ ३२४ ॥ नन्वेवमस्त्विन्द्रियाणि द्रष्टृत्वादिप्रतीतितः । आत्मा, मैवं किमेकैक समुदायो ऽथ वा मतः ॥ ३२५ ॥ आद्ये घट पुरा ऽद्राक्षं तमिदानीं स्पृशाम्यहम् । बाध्येत प्रत्यभिज्ञेयं शरीरस्य च नाशनम् ॥ ३२६ ॥ विरुद्धमतिशालित्वाद्ग्रामणीभिर्यथाक्रमम् । द्वितीये चक्षुरादीनामेकस्यापि विनाशने ॥३२७॥ तत्समूहस्य नष्टत्वात्कथमात्मस्थितिर्भवेत् । पिपासितो ऽहं क्षुधित इति प्रत्ययदर्शनात् ॥ ३२८ ॥ प्राण एव भवेदात्मा देहादेः स स्थितिप्र-

दः । नैवं प्राणो भवेदात्मा वायुत्वात्तन्निरोधनात् ॥ ३२९ ॥ प्राणायामेन मनसा, तर्हस्तु मन एव सः । संकल्पादेराश्रयत्वाद्, नैवं बुद्ध्या निरोधनात् ॥ ३३० ॥ मनस,स्तर्हि बुद्धिः स्यादात्मा कर्माऽऽश्रयत्वतः । विज्ञानं तनुते यज्ञमित्यादिश्रुतिवाक्यतः ॥ ३३१ ॥ न, सुषुप्तौ विनष्टत्वाद् मितत्वाच्च घटादिवत् । सदोदयं निरन्तं च विज्ञानं जीव इष्यताम् ॥ ३३२ ॥ प्रत्यभिज्ञादिबाधेन मतमेतन्न युज्यते । सुषुप्त्यादौ सर्वनाशा,ज्जीवात्मा शून्यमिष्यताम् ॥ ३३३ ॥ नैव,मात्मास्तिता सर्वैरहमस्मीति दृश्यते । किं च शून्यं दृश्यते वा न वादृश्यं तथा ऽग्रिमे ॥ ३३४ ॥ भवानेव हि तज्ज्ञाता जगतः सत्त्वमापतेत् । शून्यं द्वितीये नास्त्येव मानाऽभावात् खपुष्पवत् ॥ ३३५ ॥ अस्तु ज्ञाता कर्मकर्ता प्रतिदेहं विभागवान् । विभुर्नित्यो ब्रह्मणैक्यं कथं संसारिणो भवेत् ॥ ३३६ ॥ नैवं, जीवस्य कर्तृत्वे कथं मोक्षो घटेत तत् । स्वाभाविके तु कर्तृत्वे विकारित्वं भवेद् ध्रुवम् ॥ ३३७ ॥ विकारिणस्तु नित्यत्वं न दृष्टं युज्यते ऽपि वा । वास्यहस्ते यथा तक्ष्णि कर्तृत्वं दृश्यते तथा ॥ ३३८ ॥ देहेन्द्रियादिकरणे कर्तृत्वं जीवआत्मनि । न्यस्तवास्ये यथा तक्ष्णि कर्तृत्वं नैव दृश्यते ॥ ३३९ ॥ न्यस्तेन्द्रियादिकरणे सुषुप्तौ जीवआत्मनि । सर्वकर्तृत्वविरहो दृश्यते तेन चात्मनि ॥ ३४० ॥ कर्तृत्वं वास्तवं जीवे कर्त्ता नाऽऽत्मा भवेत्ततः । नन्वकर्त्तापि भोक्ता ऽऽत्मा दृष्टस्तु सुखदुःखयोः ॥ ३४१ ॥ नैवं, कर्तृत्वहीनस्य भोक्तृत्वं सम्भवेत्कथम् । अहं कर्त्ता ऽस्मि सर्वासां क्रियाणामिति धीस्तदा ॥ ३४२ ॥ स्वर्गकामो यजेतेति श्रुतिश्चापि विरुध्यते । अकर्ता वस्तुतो ऽप्यात्मा भोक्तृत्वं प्रतिप-

ष्यते ॥ ३४३ ॥ औपाधिकं पुष्पयोगाल्लौहित्यं स्फटिके यथा ।
तस्मात्कर्त्तैव भोक्ता ऽऽत्मा प्रमाणादवगम्यताम् ॥ ३४४ ॥
नन्वेवं सति जीवस्य कर्तृभोक्तृशरीरिणः । संसारिणः परं
ब्रह्म स्वरूपेणैकता कथम् ॥ ३४५ ॥ अत्रोच्यते, वत्स सौम्य
सावधानमनाः शृणु । जीवो नाम ब्रह्मणो ऽन्यद्वस्तु किं चिन्न
हीष्यते ॥ ३४६ ॥ शुद्धचैतन्यमेवैकमज्ञाने प्रतिबिम्बिते । प्रति-
बिम्बस्तनो जीवो बिम्बस्त्वीश्वर उच्यते ॥३४७॥ अविद्यया त्व-
वच्छिन्नं चैतन्यं जीव उच्यते । अविद्याविषयं ब्रह्मैवेश इत्यु-
च्यते बुधैः ॥ ३४८ ॥ जीवे ऽप्यविद्यया कोशचतुष्टयमभूत्त-
या । देहे ऽध्यस्ते मनुष्योहं स्थूलोहमिति मन्यते ॥ ३४९ ॥
क्षुधितो ऽहमिति प्राज्ञो मन्यते कल्पिते तथा । अध्यस्ते-
ष्विन्द्रियेष्वात्मा श्रोता स्प्रष्टेति मन्यते ॥३५०॥ द्रष्टा ऽऽस्वाद-
यिता ऽऽघ्राता मूको बधिर इत्यपि । अध्यस्ते मनसि स्वस्मिन्
कर्त्ता भोक्ता सुखी तथा ॥ ३५१ ॥ दुःखी कामी स्पृ-
हीत्येवं मन्यते तद्विपर्यात् । नैव स्थूलो न क्षुधितः श्रोता
वस्तु च नो तथा ॥ ३५२ ॥ न सुखी नापि दुःखी वा
न कामी वा कदा चन । न कर्ता नापि भोक्ता ऽऽत्मा
संसारी वा न वस्तुतः ॥ ३५३ ॥ शरीरस्थो ऽपि
कौन्तेय न करोति न लिप्यते । तत्रैवं सति कर्त्तारमात्मानं
केवलं तु यः ॥ ३५४ ॥ पश्यत्यकृतबुद्धित्वान्न स पश्यति दु-
र्मतिः । यस्य नाऽहंकृतो भावो बुद्धिर्यस्य न लिप्यते ॥३५५॥
हत्वा ऽपि स इमान् लोकान्न हन्ति न निबध्यते । तस्मा-
दात्मा सर्वसाक्षी नित्यज्ञानसुखात्मकः ॥ ३५६ ॥ अहम-
स्मीति जीवो ऽयमात्मास्तित्वं प्रपद्यते । नन्वात्मानमनात्मानं
जानामीति प्रतीतितः ॥ ३५७ ॥ ज्ञानाश्रयः स्वय ज्ञानस्व-

रूपत्वात्कथं भवेत् । ज्ञानाऽऽश्रयस्य मनसो जीवे ऽध्यासव-
शादयम् ॥ ३५८ ॥ अयस्येव यथा वन्हेर्दग्धृत्वमुपचर्यते ।
भूस्थे तोये यथा ऽर्को वा भूधर्मप्रतिबिम्बितः ॥ ३५९ ॥ प्र-
तीयते तथा ज्ञानं मनःस्थं धर्म आत्मनः । ज्ञानरूपस्य जी-
वस्य ज्ञातृत्वमुपचर्यते ॥ ३६० ॥ नन्वस्तु ज्ञानरूपत्वं नित्य-
ज्ञानस्वरूपता । कथ ज्ञानस्य सर्वस्य विनाशित्वं विनिश्चि-
तम् ॥ ३६१ ॥ अस्मिन्नर्थे ऽधुना ज्ञानं ममोत्पन्नं गतं त्वि-
ति । एतावन्तमहं काल परमेश्वरविग्रहम् ॥ ३६२ ॥ पश्य-
न्नेवाऽऽसमित्येव सर्वप्राणिषु संमतम् । अनुसन्धानमस्तीदं नि-
त्यज्ञानं विना कथम् ॥ ३६३ ॥ लोके ज्ञाते ऽनुसन्धानमज्ञाते
न कथं चन । धारागतानां ज्ञानानां ज्ञानं यदि न विद्य-
ते ॥ ३६४ ॥ तेषामप्यनुसन्धानमज्ञातानां कथं भवेत् । य-
द्यस्ति धारासमये न तज्जन्यं तथा सति ॥ ३६५ ॥ धाराभङ्गः
प्रसज्येत यदि नित्यं तदिष्यते । स एवाऽऽत्मा सर्वसाक्षी नि-
त्यज्ञानैकलक्षणम् ॥ ३६६ ॥ सर्वदा स्यामहमिति परमप्रेमद-
र्शनात् । सुखस्वरूप आत्मा स्याद् विषयास्तस्य व्यञ्जकाः॥३६७॥
सुखमस्वाप्समित्येवं सुखस्य स्मरणे सति । तन्मूलभूत आ-
नन्दप्रकाशो जीव इष्यते ॥ ३६८ ॥ नित्यानन्दः स्वप्रकाशो
भवेदात्मा न चेतरः । ननु सर्वसुखं जन्यपुण्यकर्मफलत्व-
तः ॥ ३६९ ॥ मैवं, व्यञ्जकवृत्तीनां जन्यत्वेनोपचर्यते । ननु
सच्चित्सुखस्यापि जीवस्य ब्रह्मणा सह ॥ ३७० ॥ सर्वज्ञेन
जगत्कर्ता कथमैक्यं तथा सति । मुक्तिकाले ऽपि जीवस्य
सर्वज्ञत्वादिकं भवेत् ॥ ३७१ ॥ सर्वज्ञत्वादिक तस्य ब्रह्मणः
कथमुच्यते । अज्ञानविषयाऽऽधारं जगज्जन्मादिकारणम्॥३७२॥
जगज्जन्मस्थितिध्वंसत्रिष्वेकैकस्य हेतुता । प्रत्येक ब्रह्मलिङ्ग-

त्वाल्लक्षणं ब्रह्मणो जगुः । उत्पत्तिस्थितिहेतुत्वं निमित्तस्यापि सम्भवेत् ॥ ३७३ ॥ उपादानत्वसिद्ध्यर्थं ध्वंसो ब्रह्मणि वर्णितः । एतावति कृते तस्मिन्निमित्तत्वं न सिध्यति ॥ ३७४ ॥ उपादाननिमित्तत्वब्रह्माऽद्वैतत्वसिद्धये । एकं लक्षणमेवेदमित्येवं के चिदूचिरे ॥ ३७५ ॥ जगत्कर्तृत्वमीशस्य कीदृशं तत्र के चन । कार्याऽनुकूलज्ञानेच्छाकृतिमत्त्व तदिष्यते ॥ ३७६ ॥ कार्याऽनुकूलज्ञानत्वं कर्तृत्वमिति चापरे । सर्वज्ञत्वमथाऽज्ञस्य कीदृशं तत्र के चन ॥ ३७७ ॥ जीवो यथा मनोवृत्त्या ज्ञातेति परिगीयते । मायावृत्या तथा ब्रह्म सर्वज्ञ इति वर्ण्यते ॥ ३७८ ॥ अथ वा ब्रह्मणः स्वाऽऽत्मचैतन्येनैव केवलम् । स्वनिष्ठसर्वभासित्वात्सर्वज्ञं ब्रह्म कथ्यते ॥ ३७९ ॥ अविद्यायां चित्रभित्तावतीत चाऽप्यनागतम् । सृष्टाऽनुन्मीलिताऽऽकारचित्रवद्वासनात्मना ॥ ३८० ॥ वर्त्ततइति तद्योगात्तयोरप्यवभासिता । एवं चेद् ब्रह्मणः सर्वविषयज्ञानरूपता ॥ ३८१ ॥

सिद्धा न सर्वज्ञातृत्वमिति चेत्तत्र सिध्यतु । सर्वज्ञं नाम सर्वार्थज्ञानरूपत्वमेव तत् ॥ ३८२ ॥ यद्वा स्वरूपचैतन्यं दृश्यकार्याऽभियोगतः । उपैति कार्यतां तच्च ज्ञानं तेनैव सर्ववित् ॥३८३॥ ननु जीवो मनोवृत्तिमनपेक्ष्यैव चिद्घनः । स्वरूपबोधेनैवाऽर्थान् जानीयाद् ब्रह्मवत्सदा ॥३८४॥ उपादानतया ब्रह्म स्वसंसृष्टमिदं जगत् । वेत्ति जीवो ऽनुपादानतया सर्वगतो ऽपि सन् ॥३८५॥ जगत्संसर्गरहितः कथं वेत्तीश्वरो यथा । गोत्वजातिः सर्वगापि नोष्ट्राश्वादिषु सङ्गिनी ॥ ३८६ ॥ किं तु सास्नादिमद्व्यक्तिसङ्गिनी स्यात्स्वभावतः । एवं जीवो ऽपि स्वाभाव्याद् घटकुड्याद्यसङ्गवान् ॥ ३८७ ॥ किं त्वविद्यामनोधर्मैः स्वभावादेव चोच्यते । जीवोपाधिर्मनो ऽन्तःस्थं यदैवाऽक्ष्यादितो

बहिः ॥ ३८८ ॥ निर्गत्य चक्षुषो रश्मीनेव दीर्घप्रभात्मना । परिणाम्याऽर्थमाप्नोति भोगाऽदृष्टे समुत्थिते ॥ ३८९ ॥ तदा तदाश्रितो जीवस्तं तमर्थं प्रकाशयेत् । यद्वा ऽन्तःकरणोपाधिर्न जीवः सर्वगो मतः ॥ ३९० ॥ परिच्छिन्नघटाद्यर्थमसंसृष्टं न भासयेत् । घटाऽधिष्ठानचैतन्यब्रह्माऽभिन्नतया यदा ॥ ३९१ ॥ वृत्तिद्वारा त्वभिव्यक्तस्तमर्थं भासयेत्तदा । जीवः सर्वगतो यद्वा स्वाऽज्ञानेनावृतः स्वयम् ॥ ३९२ ॥ कथं घटादिकं सर्वं भासयेदावृतिक्षये । वृत्त्या घटादिकं सर्वं भासयेद्दीपिका यथा ॥ ३९३ ॥ तदलं चिन्तया ऽमुष्य प्रसक्ताऽनुप्रसक्तया । कार्याऽभिन्नमुपादानकारणं ब्रह्म गीयते॥३९४॥ उपादानं प्रपञ्चस्य प्रधानं त्रिगुणात्मकम् । परिणामितया युक्तं कार्यैश्च सदृशं मतम् ॥ ३९५ ॥ ब्रह्मकार्यैर्विसदृशमेकं कूटस्थमिष्यते । तत्कथं जगदाकारपरिणामीति युज्यते॥ ३९६॥ सृष्ट्यादावीक्षणमपि प्रधानस्यैव युज्यते ॥ ३९७ ॥ सत्त्वात्सञ्जायते ज्ञानं प्रधानं सत्त्वमुच्यते । अत्रोच्यते जड लोके चेतनप्रेरितं क्षमम् ॥ ३९८ ॥ कार्याऽऽकारेण भवितुं दृश्यते युज्यते ऽपि वा । चेतनेन प्रधानस्य प्रेरणं न हि दृश्यते॥३९९॥ अचेतनस्येक्षितृत्वं गौणं मुख्येक्षणे सति । न युज्यते सत्त्ववृत्तिर्न ज्ञानं साक्ष्यसङ्गतौ ॥ ४०० ॥ सत्त्ववृत्तिर्महामायब्रह्मणस्तूपपद्यते । ससाक्षिका सृष्टिकाले स्रष्टव्या ऽर्थाऽवलम्बिनी ॥ ४०१ ॥ अनभिव्यक्तरूपादिससृष्टा चितिरेव वा । सर्गादावीक्षणं विश्वनिर्मातुर्ब्रह्मणो भवेत् ॥ ४०२ ॥ तस्माद् ब्रह्म महामायमुपादानं श्रुतेर्मतम् । मन्यते स तु नानात्वमात्मनामप्यसङ्गतम् ॥ ४०३ ॥ चिद्रूपत्वं विभुत्वं च प्रकृतेः पुरुषस्य च । अविवेकात्संसृतिं च विवेकात्स्वात्मना स्थितिम्॥४०४॥

मुक्ति चैतत्सर्वसिद्धयै प्रधानं चेशवर्जितम् । इदं युक्त्याऽऽभा-
ससिद्धं न श्रुत्यैवेति मे मतिः ॥ ४०५ ॥ विहीनत्वात्प्रमा-
णैस्तु विरुद्धत्वाच्च तैः पुनः । अनुमानं तदीयं सत्प्रतिपक्षा-
विदूषितम् ॥ ४०६ ॥ सर्ववेदैरधिगते त्वीश्वरे फलदातरि ।
विश्वमूर्तौ विश्वहेतौ कथमीशविवर्जितम् ॥ ४०७ ॥ आत्म-
भेदो ऽपि दुःखादेरसाङ्कर्याय चेन्न सः । साङ्कर्यायापि भवति
तथा हि व्यापकात्मनाम् ॥ ४०८ ॥ सर्वात्मनां सर्वगत्वा-
ज्जातं तत्सर्वसन्निधौ । दुःखादिकं तु नाऽन्यस्यैकस्यैवेति कथं
भवेत् ॥ ४०९ ॥ एतत्कर्मफलत्वाच्चेत् कर्मणा ऽप्येतदीयता ।
कुतस्तत्साधनेष्वेवमभिसंध्यादिषूच्यताम् ॥ ४१० ॥ एवं स-
त्यक्षचित्तेषु प्राणेषु स्वीयता कुतः । अन्योन्याश्रयतापत्तिर-
नवस्था तथा ऽऽपतेत् ॥ ४११ ॥ स्वकीयाऽदृष्टजन्यत्वे दे-
हादेः स्वीयता भवेत् । स्वीयत्वे तेन जन्यस्याऽदृष्टादेः स्वी-
यता भवेत् ॥ ४१२ ॥ पूर्वाऽदृष्टेन जन्यत्वाद्देहादेः स्वीयता
यदि । तस्य पूर्वस्तस्य तस्येत्यनवस्था भवेत्तदा ॥ ४१३ ॥
तस्मादात्मा त्वेक एव वैचित्र्यं सुखदुःखयोः । भवत्युपाधिभेदेन
यथेन्दोश्चलनादिकम् ॥ ४१४ ॥ वेदान्ते राजमार्गोयमेक आत्मा
परः पुमान् । सच्चिन्मात्रमानन्दो न द्वितीयो ऽस्ति कश्च-
न ॥ ४१५ ॥ तस्मात्सर्वगतादीशाद् महामायादिदं जगत् ।
जायते न जडादीशवर्जितादानुमानिकात् ॥ ४१६ ॥ एकैव
माया ऽविद्या च सदसद्रूपवर्जिता । अनादिभावरूपा च ज्ञा-
ननाश्या श्रुता श्रुतौ ॥ ४१७ ॥ विवर्त्तते ब्रह्म तत्र माया तु
परिणामिनी । स्वाऽभिन्नकार्यहेतुत्वमुपादानस्य लक्षण-
म् ॥ ४१८ ॥ तच्चोभयोरपि समं सन् पटो ऽयं जडो घटः ।
इति प्रतीयते तस्मादुपादानं द्वयं मतम् ॥ ४१९ ॥ परिणा-

मस्तत्त्वतो ऽन्यथाभावः परिकथ्यते । अतत्त्वतो ऽन्यथाभावो विवर्त इति गीयते ॥ ४२० ॥ प्रपञ्चो यदि मायायाः परिणामो विवक्ष्यते । तदा मिथ्या प्रपञ्चः स्यात् स्वाप्नमायागजादिवत् ॥ ४२१ ॥ अस्त्वेवं ब्रह्मनिष्ठत्वान्निषिद्धत्वाच्च रूप्यवत् । एवं सन् घट इत्यादिप्रत्यक्ष बाध्यतामिषात् ॥ ४२२ ॥ न चैतदिष्टं प्रत्यक्षं मानं निर्विषयं भवेत् । उपादानगतं तत्त्वं प्रपञ्चे भाति नाऽपरम् ॥ ४२३ ॥ व्यावहारिकसत्यत्वं चाऽध्यक्षस्यास्तु गोचरः । पारमार्थिकसत्यत्व श्रुत्या तस्य निषिध्यते ॥ ४२४ ॥ मिथ्याप्याकाशप्रमुखं जायते ब्रह्मणः क्रमात् । ननु विश्वस्य मिथ्यात्वं वर्णितं तस्य कः क्रमः॥४२५॥ सृष्ट्यादीनां यथा स्वप्ने रथादेर्नेक्ष्यते क्रिया । क्वापि क्वापि श्रुतौ तस्य विगानं दृश्यते क्रमे ॥ ४२६ ॥ तथा ऽऽत्माकाशप्रमुखा सृष्टिरेकत्र कथ्यते । अन्यत्र तेजःप्रमुखा प्राणाद्या ऽन्यत्र वर्णिता ॥ ४२७ ॥ अक्रमेण श्रुता ऽन्यत्र तस्मात्सृष्टिर्न युज्यते । निष्फलत्वाच्छ्रुतेः सृष्टौ तात्पर्यं नैव विद्यते ॥ ४२८ ॥ सृष्टये चाऽद्वये तस्मिन् तात्पर्यं सफलं भवेत् । यद्वा खल्वन्यथासिद्धा नीयन्ते श्रुतयो ऽखिलाः ॥ ४२९ ॥ अनन्यसिद्धया श्रुत्या तैत्तिरिश्रुतया ऽनया । आकाशवायुसृष्ट्यैव छान्दोग्ये तेजआदिकम् ॥ ४३० ॥ तत्तेजो ऽसृजतेत्याद्या श्रुतिर्नेतुं हि शक्यते । भूतानि सृष्ट्वा स प्राणमसृजतेत्यादिका तथा ॥ ४३१ ॥ कुलालः कुशलो मृत्स्नां खनितुं साधनं पुरा । कृत्वा भूमिममत्रार्थं खनित्वा विविधानि च ॥ ४३२ ॥ कृत्वा ऽमत्राण्युपरतस्तं वदन्ति मनीषिणः । यदिदं दृश्यते ऽमत्रं तत्सर्वमकरोदिति ॥ ४३३ ॥ क्रमेणेदं ब्रह्मसृष्टं युगपद्वदति श्रुतिः । मिथ्यात्मवस्तुनः सृष्टिर्लोके वेदे च दृश्यते ॥ ४३४ ॥

क्रमेणैव प्रपञ्चस्य विरोधः को ऽत्र सम्भवेत् । नन्वाकाशो नित्य एव कारणात्रयवर्जनात् ॥ ४३५ ॥ जनिश्रुतेस्तु गौणत्वात् सृष्ट्यादौ नैव जायते । एकज्ञानात्सर्वबुद्धेर्विभुत्वाज्जनिविश्रुतेः ॥ ४३६ ॥ विवर्तकारणे कृत्वा ब्रह्मणो व्योम जायते । जायतां खं मातरिश्वा छान्दोग्ये तदकीर्तनात् ॥ ४३७ ॥ सैषा ऽनस्तमिता देवतेत्युक्तेश्च न जायते । श्रुत्यन्तरोपसंहारगौणयनस्तमयश्रुतिः ॥ ४३८ ॥ वियद्वज्जायते वायुः खगं ब्रह्मैव कारणम् । तत्तेजो ऽसृजतेत्युक्ते ब्रह्मजं तेज इष्यते ॥४३९॥ वायोरग्निरिति श्रुत्या स्याद्वायोर्ब्रह्मसंयुतात् । लोके सर्वजनैर्दृष्टेर्न वन्हेरुदकोद्भवः ॥ ४४० ॥ विरुद्धत्वादपां जन्म ब्रह्मणः सर्वकारणात् । अग्नेराप इति श्रुत्या ब्रह्मणो वन्ह्युपाधिकात् ॥ ४४१ ॥ अपां जन्मविरोधस्तु सूक्ष्मयोर्नाऽग्निनीरयोः । ता अन्नमसृजन्तेति श्रुतमन्नं यवादिकम् ॥ ४४२ न भूमेर्जायते त्वेवं व्रीह्याद्यन्नं जलाद्भवेत् । भूताऽधिकारात्कृष्णादिरूपस्य श्रवणादपि ॥ ४४३ ॥ तथा ऽद्भ्यः पृथिवीत्युक्ते पृथिव्यन्नमभेदतः । क्लृप्तः कल्प्याद्वरं तेन लये सृष्टिक्रमो भवेत् ॥ ४४४ ॥ हेतावसति कार्यस्य न सत्त्वं युज्यते ततः । पृथिव्यप्स्विति चोक्तत्वाद्विपरीतक्रमो लये ॥४४५॥ श्रोत्रादीनीन्द्रियाण्येवं वागादीनि तथा मनः । सृष्टेः प्राणिषणा ऽन्येषां सद्भावोक्तेरनादरः ॥ ४४६ ॥ एकबुद्ध्या सर्वबुद्धेर्भौतिकत्वाज्जनिश्रुतेः । उत्पद्यते ऽस्तिता तेषां प्रागन्यान्तरसृष्टितः ॥ ४४७ ॥ भौतिकत्वादिन्द्रियाणां खादेः पश्चात्समुद्भवः । शब्दादिपञ्चके तत्र यस्य यस्याऽवभासकम् ॥४४८॥ तत्तद्गुणवदारब्धं तत्तज्ज्ञानेन्द्रियं मतम् । अपञ्चीकृतभूतानां सात्विकांशैर्यथाक्रमम् ॥ ४४९ ॥ ज्ञानेन्द्रियाणि जायन्ते

श्रोत्रादीनि तथैव च । वागादीनि रजोंशैस्तु पञ्चकर्मेन्द्रियाणि च ॥ ४५० ॥ अपञ्चीकृतभूतानां सर्वेषां सात्त्विकांशतः । समष्टिव्यष्टिभेदेन भिन्नमुत्पद्यते मनः ॥ ४५१ ॥ मनस्तु व्यष्टिभूतेषु समष्ट्यनुगतं भवेत् । श्रोत्रत्वक्नयनं जिह्वा घ्राणं धीन्द्रियपञ्चकम् ॥ ४५२ ॥ वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियपञ्चकम् । मनो बुद्धिरहङ्कारश्चित्तं चेति चतुष्टयम् ॥ ४५३ ॥ अन्तःकरणमेवैकं भिद्यते वृत्तिभेदतः । शब्दस्पर्शौ रूपरसगन्धाः पञ्चकबुद्धयः ॥ ४५४ ॥ वचनाऽऽदानगमनविसर्गाऽऽनन्दलक्षणम् । भूतभव्यार्थविषयं स्मरणं चाऽपरं मतम् ॥ ४५५ ॥ एकादशैव कार्याणि तावन्त्येवेन्द्रियाण्यपि । वृत्तिलाभस्तत्र तत्र देहे कर्मवशादसोः ॥ ४५६ ॥ इन्द्रियाणि प्राणवृत्तिरित्याहुः कापिला जनाः । देहस्थवृत्तिसद्भागेष्वेवाऽक्षत्वं समाप्यताम् ॥ ४५७ ॥ व्यवहारस्तावतैव सिध्येदुत्क्रान्तिकीर्तनात् । परिच्छिन्नानि तान्येव न विभूनीति मे मतिः ॥ ४५८ ॥ अतः प्राणादीन्द्रियाणि विरूपाणीति निश्चयः । मुख्यः प्राणः पञ्चवृत्तिः सृष्ट्यादौ नैव जायते ॥४५९॥ आसीदिति प्राणचेष्टा प्राक् सृष्टेः श्रूयते यतः । आसीदिति ब्रह्मसत्त्वं प्रोक्तं वा तन्निषेधनात् ॥ ४६० ॥ एतस्माज्जायते प्राण इत्युक्तेरेव जायते । समष्टिव्यष्टिभेदेन प्राणोऽपि द्विविधो मतः ॥४६१॥ अपञ्चीकृतभूतानां रजोंशैरखिलैश्च सः । जायते तत्र सूत्रात्मा समष्टिरभिधीयते ॥ ४६२ ॥ अस्माकं व्यष्टयः प्राणा विभागोऽयं प्रकीर्तितः । बाह्यो वायुस्तनाविष्टः प्राण इत्यसमञ्जसम् ॥ ४६३ ॥ वायुना ज्योतिषा प्राण इति श्रुत्या पृथक् श्रुतः । वयसां पञ्जरस्थानां चेष्टया पञ्जरे यथा ॥४६४॥ चेष्टा यथैव देहे ऽक्षचेष्टया चेष्टलक्षणा । साधारणी क्रिया

प्राण इत्याहुः कापिला जनाः ॥ ४६५ ॥ नैवमिन्द्रियजज्ञानदे-
हस्थक्रिययोर्महत्। वैलक्षण्यं भवेदेतद् दृष्टान्ते नैव दृश्यते॥४६६॥
प्राण एष पञ्चवृत्तिर्विभुः स्यात्तु व्युपक्रमे । हिरण्यगर्भपर्यन्त-
सर्वदेहसमोक्तितः ॥ ४६७ ॥ समष्टिव्यष्टिरूपेण विभुतैषा
ऽऽधिदैविकी । आध्यात्मिको ऽल्पः प्राणो ऽसावुत्क्रान्त्या-
दिश्रुतेर्भवेत् ॥ ४६८ ॥ स्वतन्त्राण्येव चेष्टन्ते न देवैश्चक्षुरा-
दयः । नो चेदक्ष्यादिजो भोगो देवानां स्यान्न चाऽऽत्म-
नः ॥ ४६९ ॥ श्रुतमग्न्यादितन्त्रत्वं भोगो ऽग्न्यादेस्तु नो-
चितः । देवदेहेषु भोगो ऽस्तु जीवो भुङ्क्ते स्वकर्मणा ॥ ४७० ॥
मुख्यप्राणस्य देहस्थसर्वाऽक्षस्थानगामिनः । भवन्ति वृत्तयो
ऽक्षाणि न भिद्यन्ते ततः कुतः ॥४७१॥ तद्रूपत्वश्रुतेः प्राणना-
म्नोक्तत्वाच्च तन्मृषा । श्रमाऽश्रमादिभेदोक्तेर्गौणे तद्रूपनाम-
नी ॥ ४७२ ॥ आलोचकत्वेनाऽन्यानि प्राणो नेता ऽक्षदेहयोः ।
नामरूपव्याकरणे न कर्त्तेशो न तु स्वयम् ॥ ४७३ ॥ अनेन
जीवेनेत्युक्तेर्व्याकर्त्ता जीव इष्यते । जीवाऽन्वयः प्रवेशेन स-
न्निधेः सर्वसर्जने ॥ ४७४ ॥ जीवो ऽशक्तः शक्त ईश उक्तमो-
क्तिस्तथेशितुः । एव लोका लोकपाला लोकान्तर्वर्त्तिनस्त-
था ॥ ४७५ ॥ ब्रह्माण्डं च जगत्सर्वं सृष्टं तेन महात्मना ।
महामायाविना सर्वं यदा केवललीलया ॥ ४७६ ॥ एवं स-
र्वज्ञसर्वेशस्तत्पदार्थो निरूपितः । एवं सिद्धस्येश्वरस्य सर्व-
ज्ञस्य महात्मनः ॥ ४७७ ॥ तद्विलक्षणजीवस्य कथमैक्यं भ-
वेच्छृणु । जगत्कर्तृत्वमीशत्वं सर्वज्ञत्वादिकं तथा ॥ ४७८ ॥
अन्यच्च सकलं धर्मजातं ब्रह्मणि कल्पितम् । मायया तलमा-
लिन्यमाकाशे कल्पितं यथा ॥ ४७९ ॥ सगुणश्रुतयः सर्वाः
साऽवकाशा उपासने । नोपासने साऽवकाशा निर्गुणश्रुतयो

ऽखिलाः ॥ ४८० ॥ निर्गुणश्रुतयः सर्वाः प्रबलास्तेन संमताः । सगुणश्रुतयः सर्वा बाधितास्तद्विरोधतः ॥ ४८१ ॥ व्यावहारिकधर्मेषु स्थास्यन्ति ब्रह्मणस्ततः । सच्चिदानन्दमद्वैत निरवद्यं निरञ्जनम् ॥ ४८२ ॥ विशुद्धं गम्यते ब्रह्म सत्यमित्यादिवाक्यतः । अकर्तृत्वमभोक्तृत्वं सच्चिदानन्दरूपता ॥ ४८३ ॥ जीवस्य पूर्वमेवोक्ता तादृशोर्जीवकेशयोः । ऐक्यं वदन्ति वेदान्तास्तत्त्वमस्यादयो ऽखिलाः ॥ ४८४ ॥ कर्मकर्तृस्तुतिद्वारा कर्मस्तुतिपरा मताः । वेदान्ता जीवपरयोर्नाऽभेदप्रतिपादकाः ॥ ४८५ ॥ स्वर्गकामो यजेतेति ज्योतिष्टोमादिसाधनम् । विहितं कर्म तत्कर्ता यदि देहः कथं फलम् ॥ ४८६ ॥ कालान्तरोपभोग्यं स्यादतो देहाऽतिरिक्तता । आत्मनो गम्यते तद्वच्छुद्धत्वादिगुणास्तथा ॥ ४८७ ॥ कर्तृस्तुत्या कर्मणां ते स्तावका नैक्यबोधकाः । प्ररोचना त्वाङ्गतयोपयुज्यतइतरिणाव ॥ ४८८ ॥ वेदान्तो न पृथक् शास्त्रं लिङ्लोट्तव्यादिचोदनाः । क्रियार्थास्तदभावाच्च श्रुत्यन्तस्याऽर्थवादता ॥ ४८९ ॥ आम्नायस्य क्रियार्थत्वादानर्थक्यमिति स्फुटम् । अतदर्थस्य विधिना त्वेकवाक्यत्वमुच्यते ॥ ४९० ॥ स्तुत्यर्थत्वेन मुक्तिश्च नित्यकर्मादिभिर्भवेत् । नित्यानां करणात्पापकर्मसञ्चयनाशनम् ॥ ४९१ ॥ काम्यत्यागात्तत्फलाय न देहो जायते तथा । निषिद्धाऽऽचरणाऽभावान्नरको ऽपि न जायते ॥४९२॥ प्रारब्धकर्मणां भोगात् क्षयात्सर्वस्य कर्मणः । अभावाद्भाविदेहानामुत्पत्तिः केन सम्भवेत् ॥ ४९३ ॥ अशरीरत्वमोक्षो ऽयं विना ज्ञानेन सिध्यति । स्यादेतदेवं वेदस्य सर्वस्याऽप्याशयो यदि ॥ ४९४ ॥ तत्र स्यान्न तथा ऽस्त्येव तथा ह्येतत्प्रकाश्यते । वेदान्तो न पृथक् शास्त्रं वदन् वादी स कर्म-

ठः ॥ ४९५ ॥ प्रष्टव्यो विषयाऽभावात् फलाऽभावाच्च चाऽग्रिमः । उपक्रमादिभिर्लिङ्गैस्तात्पर्यं ब्रह्मणि स्फुटम् ॥ ४९६ ॥ ब्रह्मैव वेदशिरसामखण्डाऽऽनन्दमद्वयम् । विषयो न द्वितीयोऽपि सुखप्राप्त्यादिसम्भवात् ॥ ४९७ ॥ किं च विप्रो न हन्तव्य इत्यादौ न हि चोद्यते । क्रिया तत्साधनं वापि न क्रियार्थेन मानता ॥ ४९८ ॥ तस्मात्कर्तृस्तुतिद्वारा न कर्मपरता भवेत् । कृतक यदनित्यं तद् न्यायेनोद्दालिता सती ॥ ४९९ ॥ तद्यथेति श्रुतिः सोममपामेत्यादिकां श्रुतिम् । बाधते सत्त्वशुद्ध्यर्थं कर्म नानाविधं भवेत् ॥ ५०० ॥ कर्मकाण्डं ब्रह्मकाण्डशेषमेव स्वयं पुनः । शुद्ध्यर्थं कर्म विदधद् मुक्त्यर्थं न कदा चन ॥ ५०१ ॥ कृत्स्नेन वेदवृन्देन स्वाभाविक्या निरोधनम् । प्रवृत्तेः क्रियते तेन न तु कश्चित्प्रवर्त्यते ॥ ५०२ ॥ प्रव्रजेद् ब्रह्मचार्येव रागी चेत्परयोषितः । न गृह्णीयात् परं त्वेकां कन्यामुद्वाहयेदिति ॥ ५०३ ॥ उद्वाहितायां कन्यायां यथाकालं कुरु क्रियाः । क्रियाकर्त्ता स्वदारे ऽपि नित्यं मा गच्छ किं तु सः ॥ ५०४ ॥ ऋतौ भार्यामुपेयादित्येवं वर्णयति श्रुतिः । वृद्धस्त्वं कर्मणा मोक्षं विकत्थयसि कर्मठः । निन्द्यन्ते कर्मठा वेदैश्चमसेनापि योगिना ॥ ५०५ ॥

"अविद्यायामन्तरे वर्त्तमानाः स्वयं धीराः पण्डितंमन्यमानाः । जघन्यमानाः पर्यन्ति मूढा अन्धेनैव नीयमाना यथा ऽन्धाः । अविद्यायां बहुधा वर्त्तमाना वयं कृतार्था इति अभिनन्दन्ति बालाः । यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते । इष्टापूर्त्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे ते सुकृते नु भूत्वा इमं लोकं हीनतरं वा विशन्ति"।

कर्मण्यकोविदाः स्तब्धा मूर्खाः पण्डितमानिनः । वद-
न्ति चाटुकान् मूढा युता मायागिरोत्सुकाः ॥ ५०६ ॥ रजसा
घोरसङ्कल्पाः कामुका अधिमन्यवः । दाम्भिका मानिनः
पापा विहसन्त्यच्युतप्रियान् ॥ ५०७ ॥ वदन्ति चान्योन्य-
मुपासितस्त्रियो गृहेषु मैथुन्यपरेषु चाशिषः । यजन्त्यसृष्टाऽन्नवि-
धानदक्षिणा वृत्त्यै परं घ्नन्ति पशूनतद्विदः ॥ ५०८ ॥ लोके
व्यवायाऽऽमिषमद्यसेवा नित्यास्तु जन्तोर्न हि तत्र चो-
दना । व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु नि-
वृत्तिरिष्टा ॥ ५०९ ॥ यदुक्तं कर्मणो ऽभावादशरीरत्वलक्ष-
णः । मोक्षो भवेदृते ज्ञानात् तदेतन्नैव युज्यते ॥ ५१० ॥ न
हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् । कार्यते ह्यवशः कर्म
सर्वः प्रकृतिजैर्गुणैः ॥ ५११ ॥ अतः सुनिपुणस्यापि ज्ञानशू-
न्यस्य देहिनः । प्रत्यवायकरं कर्म भवत्येव न संशयः ॥ ५१२ ॥
अज्ञस्य कामना नेति वदितुं केन शक्यते । अतः कामेन क-
र्माणि कुरुते ह्यवशो ऽपि सः ॥ ५१३ ॥ नित्यानां करणा-
त्केषां पापानां स्याद्विनाशनम् । नाऽशुद्धानां महापातकानां
वा स्याद्विनाशनम् ॥ ५१४ ॥ प्रारब्धव्यतिरिक्तानां सञ्चितानां
च कर्मणाम् । सद्भावाद्भाविदेहे ऽपि भवेन्मोक्षः कुतस्त-
व ॥ ५१५ ॥ निरपेक्षादतो ज्ञानाद् मोक्षः स्यान्न तु कर्मभिः ।
यदा रज्ज्वां फणिद्रष्टुः पुंसः कर्मशतैरपि ॥ ५१६ ॥ न ग-
च्छेद्भयकम्पादि रज्जुज्ञानात्तु गच्छति । तद्वत्स्वात्माऽज्ञानबन्धः
स्वज्ञानाद्विनिवर्त्तते ॥ ५१७ ॥ तस्मादखण्डविज्ञानान्मुक्तिः
स्यान्न तु कर्मभिः । सत्यमित्यादिकं वाक्यमखण्डार्थस्य बोध-
कम् ॥ ५१८ ॥ स्वरूपलक्ष्यवाक्यत्वात्तथा प्रश्नोत्तरत्वतः ।
तत्त्वमस्यादिकं वाक्यमखण्डार्थस्य बोधकम् ॥ ५१९ ॥ अ-

कार्यकारणं द्रव्यं समानाश्रयगीस्त्वतः । प्रकृष्टवाक्यवत्सोयं-वाक्यत्वञ्चेष्यते बुधैः ॥ ५२० ॥ संसर्गाऽसङ्गिसम्यग्धीहेतुता या गिरामियम् । उक्ता ऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थता ॥ ५२१ ॥ सम्बन्धत्रयमादाय चाऽखण्डार्थस्य बोधकम् । सामानाधिकरण्यं च विशेषणविशेष्यता ॥ ५२२ ॥ लक्ष्यलक्षणसम्बन्धपदार्थः प्रत्यगात्मता । उक्तवाक्येषु सर्वत्र लक्षणा भागलक्षणा ॥ ५२३ ॥ अत्र जीवेशयोरैक्यं तादात्म्यं तु न संमतम् । भेदाऽभेदौ विरुद्धत्वात्कथं स्यातां परात्मनोः ॥ ५२४ ॥ उक्ताऽऽत्मज्ञानसिद्ध्यर्थं श्रवणं मननं तथा । ध्यानं समाधिः कर्त्तव्यं श्रवणादेर्विधानतः ॥ ५२५ ॥ वेदान्तानामद्वितीये तात्पर्यज्ञानसिद्धये । ऊहाऽपोहात्मिका चित्तक्रियैव श्रवणं विधेः ॥ ५२६ ॥ अपूर्वः परिसङ्ख्या वा विधिर्नियम एव वा । मननं च श्रुताऽर्थानामूहाऽपोहविचिन्तनम् ॥ ५२७ ॥ विजातीयतिरस्कारः सजातीयधियस्तथा । प्रवाह उच्यते ध्यानं समाधिर्द्विविधः स्मृतः ॥ ५२८ ॥ सविकल्पो निर्विकल्पः सविकल्पः स चोच्यते । ज्ञातृज्ञेयविकल्पानामेको यत्र च विद्यते ॥ ५२९ ॥ निर्विकल्पसमाधिस्तु ज्ञातृज्ञेयादिवर्ज्जितः । अद्वितीयाऽऽकारमात्रचित्तसंस्थितिरुच्यते ॥ ५३० ॥ एवं साधनसम्पन्नपुरुषस्य हि जायते । जीवब्रह्मैक्यविज्ञानं सर्वाऽनर्थनिवर्त्तनम् ॥ ५३१ ॥ फलव्याप्यत्वमेवाऽस्य शास्त्रकृद्भिर्निवारितम् । ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्यत्वमिष्यते ॥ ५३२ ॥ निर्ममो निरहङ्कारः पूर्णबोधसुखात्मकः । कृतकृत्यः सर्वसाक्षी जीवन्मुक्तो न संशयः ॥ ५३३ ॥ तस्मादज्ञाननाशाय ब्रह्माऽऽत्मप्रतिपत्तये । श्रुत्वा मत्वा ब्रह्मतत्त्वं सर्वसाधनसंयुतः ॥ ५३४ ॥ सर्वदा

संयमं कुर्याद् भोगाऽनासक्तधीः सुधीः । सर्वदा संयमं कुर्वन् यद्यत्तस्य विरोधि तत् ॥ ५३५ ॥ सकलं संन्यसेद्विद्वान् किं दण्डादिकर्मों कुतः । तस्यापि तद्विरोधित्वाद् गुहासु च सरित्सु च ॥ ५३६ ॥ निधाय दण्डवस्त्रादीन् पुरतो ध्यायतः परम् । मनो दुष्टं चञ्चलं च ध्यायतस्तत्र योगिनः ॥ ५३७ ॥ गच्छेद् गोपशुचौरेभ्यः शङ्कया नियतं चलम् । नास्येवैकत्र वासो ऽस्य सञ्चारस्य विधानतः ॥ ५३८ ॥ एकाग्रत्वविरोधित्वात्तस्माद्दण्डादिक त्यजेत् । परहंसयतेस्तस्य न मुख्यो ऽस्तीति च श्रुतेः ॥ ५३९ ॥ न चैतत्सिद्धविषयं साधकस्तु परिग्रहेत् । इति वाच्यं वाक्यशेषे ध्यानादौ श्रूयते विधिः ॥५४०॥ विधेर्न सिद्धो विषयो विश्रान्तहृदयो महान् । विविक्तं परमात्मानं प्रत्यक्षेन परीक्षतः ॥ ५४१ ॥ जानन् साक्षात्कर्तुमिच्छुः साधको विषयो विधेः । कथं ननु गृहीतस्य दण्डादेर्विधिपूर्वकम् ॥ ५४२ ॥ परित्यागो ऽन्यथा व्यर्थो विधिः स्यात्तत्प्रमापकः । मैवं मन्दाऽधिकाराणां विधिस्तत्प्रापको भवेत् ॥ ५४३ ॥ तीव्रवैराग्ययुक्तानां मुख्यानामधिकारिणाम् । न दण्डादेर्ग्रहः सो ऽपि न मुख्यो ऽस्ति श्रुतेर्वशात् ॥ ५४४ ॥ किं चाऽन्यदाग्रही दण्डे प्रष्टव्यो घटदण्डयोः । दण्डादेर्विद्यमानत्वात्त्यागो न भवता मतः ॥ ५४५ ॥ संस्कृतत्वाद्वा भवता पक्षयुग्मं प्रणाशितम् । वस्त्रादेर्विद्यमानत्वात्त्यागो ऽपि च कथं तव ॥ ५४६ ॥ संस्कृतस्याऽग्निवेदादेस्त्याज्यता भविता कथम् । कथं महामन्त्रवृन्दैर्गृहीतामग्निसाक्षिकाम् ॥५४७॥ उपभोग्यां धर्मपत्नीं मुक्त्वा प्रव्राजितो भवान् । भोगेच्छाविरहात्तस्य रक्षणादिप्रयासतः ॥ ५४८ ॥ प्रतिबन्धकरत्वाच्च पुरुषार्थस्य वेदहक् । त्यक्तवानस्मि तामेव दण्डाद्यैस्त्यज भोग्य-

ताम् ॥ ५४९ ॥ सा वेददृष्टिस्ते कुत्र गतेदानीं यतेस्तथा ।
सा विरक्तिस्तपश्चर्या युक्ता ऽऽहारादिरूपिणी ॥ ५५० ॥
न मे भार्या ऽस्ति संन्यासं कृतवान् ब्रह्मचार्यहम् । अतो द-
ण्डादिकं श्रुत्वा गृहीतमिति चेच्छृणु ॥ ५५१ ॥ गौरी वा
वरयेत्कन्यां कन्यामुद्वाहयेद्विरम् । प्रजातन्तुं मा व्यवच्छेत्सी-
रितिप्रभृतिश्रुतेः ॥ ५५२ ॥ ऋणत्रयश्रुतेस्तद्वन्नाऽपुत्रस्येति च
श्रुतेः। समन्त्रस्य विधेः सत्त्वादुद्वाहं त्यक्तवान् कथम् ॥५५३॥
विरक्तत्वान्मया त्यक्तो विवाह इति चेत्कथम् । दण्डादौ र-
मसे भोग्यबुद्ध्या वैषयिकं सुखम् ॥ ५५४ ॥ अजानस्तत्प्र-
तिनिधिं कृत्वा किं रमसे तु तत् । नाऽहमेवं विधो भ्रान्तो
विना ज्ञानं न सिध्यति ॥ ५५५ ॥ दण्डचैलादिकमिति
गृहीते विधितो मया । कश्चित्ककुत्पटः कं चन नत्वा ब्रह्मसं-
विदम् ॥ ५५६ ॥ लब्धवानिति यद्यस्ति तथा कुर्यामहं
पुरा । न चैवं दृश्यते क्वाऽपि तस्मान्न करवाण्यहम् ॥ ५५७ ॥
मैवं मंस्था न कुत्रापि श्रूयते दिक्पटो यतिः । उत्पन्नब्रह्म-
विज्ञानश्रवणाधिऽकृतो ऽपि वा ॥ ५५८ ॥ नास्त्येवेति वि-
जिज्ञासुर्दिक्पटः कथितः पुरा । न्यायसाम्यात्परोक्षेण ब्रह्म-
विज्ञानवांस्तथा ॥ ५५९ ॥ तस्मात्परोक्षविज्ञानः संयमं सर्वदा
चरन् । विरोधि दण्डवस्त्रादि संत्यजेदत्र च श्रुतिः ॥ ५६० ॥

"परमहंसत्रयाणां न कटिसूत्रं न कौपीनं न वस्त्रं न दण्डो न कमण्डलुः, जातरूपधरत्वं विधिः। संन्यासकाले ऽप्यलंबुद्धि-पर्यन्तं धृत्वा तदनन्तरं कटिसूत्रं कौपीनं दण्ड वस्त्रं कमण्डलुं सर्वमप्सु विसृज्याऽथ जातरूपधरो भूत्वा सञ्चरेत्"।

अजानतामर्थमिमं मन्दानां भ्रामकं वचः । वदतां भ्रा-
न्तिमाशङ्क्यां किं चिदुत्तरमुच्यते ॥ ५६१ ॥ ननूक्तरीत्या सं-

न्यस्य श्रुतवेदान्तवाक्यतः । उत्पन्नब्रह्मज्ञानस्य निर्ममत्वादिकं कथम् ॥ ५६२ ॥ विद्यारण्यादिगुरुभिरेवमेवोदितो यतेः । दण्डादेर्विद्यमानत्वाद्विहितत्वाच्च तत्र हि ॥ ५६३ ॥ अभिमानो यतेर्युक्तः स्वधर्मनिधनस्मृतेः । संत्यक्ते घटदण्डादावभिमानो निवर्तते ॥ ५६४ ॥ भूयस्त्यागस्तु देवादेर्नास्त्येव श्रूयते ऽपि न । इति चेत्स तु प्रष्टव्यः शृण्वतां वेदमस्तकम् ॥ ५६५ ॥ यतीनां ब्रह्मबोधः किं जायते न, न चेत्तदा । भज्येत श्रवणादीनां श्रोतव्य इति चोदना ॥ ५६६ ॥ आद्ये तत्साधनैः सिद्धमुत नो नेति चेद्विधिः । शान्तो दान्त उपरत इति भग्नो भवेत्तव ॥ ५६७ ॥ अहेतुकत्वं चाऽस्य स्यात्साधने ब्रह्मधीर्यदि । अमानित्वाऽनहन्ते तु ह्यप्रकम्पो गिरिर्यथा ॥ ५६८ ॥ आपतेताममानित्वमदम्भित्वादिवाक्यतः । उत्पन्नज्ञानरक्षार्थं यतेत न यतेत वा ॥ ५६९ ॥ न चेद् ज्ञानं विनश्येत्तु सादित्वात्संसरेद् ध्रुवम् । सार्थको वरघातेति न्याय आपादितस्त्वया ॥ ५७० ॥ आद्ये कामयतः कण्ठे विद्वत्संन्यास आपतेत् । तदङ्गत्वेन दण्डादेस्त्यागः श्रुत्यादिसमतः ॥ ५७१ ॥ खिन्नान् या मातृवद्वत्सान् निर्बन्धात्स्वैरचारिणः । भक्षणादौ तु विधिना प्रहृत्यापि नियोजयेत् ॥ ५७२ ॥ सद्यस्तृप्तिकरत्वाय भ्रान्ता सा लौकिकी सुतान् । किं पुनर्लोकरक्षार्थं कोटिमातृसमा श्रुतिः ॥ ५७३ ॥ परमानन्ददं साऽङ्गं विदध्याद् मुख्यमेव सा । सापेक्षं दण्डवस्त्रादिग्रहणं धीनिरोधने ॥ ५७४ ॥ प्रतिबन्धं त्याजयित्वा परहंसादिलक्षणम् । विद्वन्न्यासमतस्तस्मिन्कर्ता विद्वान् भवेद् ध्रुवम् ॥ ५७५ ॥ अथ कर्त्तव्यताऽभावाद् ज्ञानिनो मे कथं भवेत् । यत्नो न तत्साम्प्रतं किंकर्त्तव्याऽभावता बहिः ॥ ५७६ ॥ उताऽन्तर्दृश्यमानत्वात् प्रवृत्तेर्बाह्य एव ते ।

भूयः स्यात्सत्यमेतत्तु वर्त्तन्तामिन्द्रियादयः ॥ ५७७ ॥ मम किं
तावता ऽसङ्गचिद्व्योम्नः सर्वसाक्षिकः । शास्त्रीये किमशास्त्रीये
तत्र देहेन्द्रियादयः ॥ ५७८ ॥ प्रवर्तन्ते द्वितीये ते तेषां स्वाभा-
वाविकत्वतः । प्रवर्त्तन्ते तथाधर्मशास्त्रादेरतिलङ्घिना ॥ ५७९ ॥
ते प्रसज्येत मा काङ्क्षीर्विड्वराहादितुल्यताम् । न तावन्मात्रता
किं तु स्वैरचारित्वमप्यतः ॥ ५८० ॥ चक्रुर्निन्दां जना नूनं
शास्त्राणि च तथैव हि । बुद्ध्वाऽद्वैतसतत्त्वस्य यथेष्टाऽऽचरणं
यदि ॥ ५८१ ॥ शुनां तत्त्वदृशां चैव को भेदो ऽशुचिभक्षणे ।
तत्त्वं बुद्ध्वा ऽपि कामादीन्निःशेषं न जहासि चेत् ॥ ५८२ ॥
गच्छेस्त्व नरकान् घोरान् महारौरवसंज्ञकान् । सर्वे ब्रह्म व-
दिष्यन्ति साम्प्रतं तु कलौ युगे ॥ ५८३ ॥ नाऽनुतिष्ठन्ति मैत्रेय
शिश्नोदरपरायणाः । नाऽविरक्ता दुश्चरितो नाऽशान्तो नाऽस-
माहितः ॥ ५८४ ॥ नाऽशान्तमानसो वा ऽपि प्रज्ञानं त्वेव-
माप्नुयात् । यतिर्द्वयेन पतति ब्रह्मज्ञानरतो ऽपि सन् ॥ ५८५ ॥
धीपूर्वं रेतसोत्सर्गात्तथा धातुप्रतिग्रहात् । दोषरेतैः प्रायश्चि-
त्तिर्न प्रसिध्येच्च ते ततः ॥ ५८६ ॥ शोकमोहादिभिश्चित्त क्षो-
भयेस्त्वामनारतम् । विवेकशून्यस्तत् क्षुब्ध मनो जेतुमशक्तिमा-
न् ॥ ५८७ ॥ तदधीनो रौरवं च प्राप्स्यसे ऽज्ञानवार्त्तया ।
श्रुतिस्मृती ममैवाऽऽज्ञा यस्ते उल्लङ्घ्य वर्तते ॥ ५८८ ॥ आ-
ज्ञाच्छेदी मम द्वेषी मद्भक्तो ऽपि न वैष्णवः । यः शास्त्रविधि-
मुत्सृज्य वर्त्तते कामचारतः ॥ ५८९ ॥ न स सिद्धिमवाप्नोति
न सुखं न परां गतिम् । यएतदभ्यसूयन्तो नाऽनुतिष्ठन्ति
मे मतम् ॥ ५९० ॥ सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ।
आद्य एवाऽभ्यासवशाज्जन्मान्तरशतेष्वपि ॥ ५९१ ॥ शास्त्रीय-
एव मे तत्र वर्त्तन्ते चेन्द्रियादयः । किमत्र कर्मण्यथ वा साधने

ब्रह्मसंविदः ॥ ५९२ ॥ तानि कानीह कर्माणि यज्ञदानादि वा ऽथ वा । स्नानशौचाऽर्चनादीनि षट्कर्माण्यग्रिमो न हि ॥५९३॥ त्यक्तत्वात्कर्मणां षण्णां स्नानादेरनपेक्षणात् । स्नान त्रिषवणं प्रोक्तं कुटीचकबहूदयोः ॥ ५९४ ॥ हंसे तु सकृदेव स्यात् परहंसे न विद्यते । द्वितीये श्रवणे किं वा मननध्यानयोरपि ॥ ५९५ ॥ प्रथमे संविदस्तस्य सिद्धत्वाच्छ्रवणे त्वया । प्रवृत्तिहेतुर्वक्तव्यः किं ज्ञानाऽवगमेन वा ॥ ५९६ ॥ प्रतिष्ठा शिष्यभिक्षार्थं स्यादन्ते प्रकटीकृतम् । वैराग्यं शिष्यलोकानां संग्रहो निन्द्यते बुधैः ॥ ५९७ ॥ आशीर्युक्तानि कर्माणि हिंसायुक्तानि यानि च । लोकाऽनुग्रहयुक्तानि नैव कुर्यान्न कारयेत् ॥ ५९८ ॥ अहङ्कारो ममत्वं च चिकित्सा कर्म साहसम् । प्रायश्चित्तं प्रवासश्च मन्त्रौषधगराशिषः ॥ ५९९ ॥ प्रतिषिद्धानि चैतानि सेवमानो व्रजेदधः । अशिल्पजीवी न गृहस्थश्च नित्यं जितेन्द्रियः सर्वतो विप्रमुक्तः । अनेकस्थानी लघुरल्पाऽशनश्च चरन् देशानेकचरः स भिक्षुः ॥ ६०० ॥ नाऽसच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् । अतिवादान् त्यजेत्तर्कान् पक्षं कं चन नाऽऽश्रयेत् ॥ ६०१ ॥ न शिष्याननुबध्नीत ग्रन्थान् नैवाऽभ्यसेद्बहून् । न व्याख्यामुपयुञ्जीत नाऽऽरम्भानारभेत् क चित् ॥ ६०२ ॥ संत्यजेत्सर्वकर्माणि लोकाचारं च सर्वशः । ज्ञानरक्षेति चेदस्तु श्रवणे केवले कुतः ॥ ६०३ ॥ प्रवृत्तिः श्रवणे यद्वन्मतिसंयमयोरपि । सा ऽस्तु प्रवृत्तिर्देहादेः श्रवणे वासनावशात् ॥ ६०४ ॥ तदभावाच्च प्रज्ञाद्यौ प्रवृत्तिर्नैव जायते । साधनत्वाऽविशेषे ऽपि मननादेस्तु वासना ॥ ६०५ ॥ कथं नास्त्यप्रधानत्वाद् द्वयं त्यक्तं प्रयेति चेत् । नाऽऽग्नेयादेः प्रधानत्वात्सामिधागादिकं वि-

ना ॥ ६०६ ॥ फलस्य जनकत्वं स्यादतो ऽङ्गत्वं तयोरपि। अ-
नुष्ठानाद्वासना तु तयोरस्तु प्रवर्त्तिका ॥ ६०७ ॥ तस्माच्छ्र-
वणसभूतात्परोक्षादेव नृत्यसे । अथाऽपरोक्षमेवादावुत्पन्नं ज्ञा-
नमागमात् ॥ ६०८ ॥ तात्कालिके च मनने समाधाने स्थिते
सति । ब्रह्मस्त्वमसीत्यादौ प्रत्यक्षं जायते यथा ॥ ६०९ ॥
पर तु मनश्रादीनि भुञ्जन्तजधियो ऽपि मे । क्षणमात्रं न ति-
ष्ठन्ति विना पुस्तकमन्यथा ॥ ६१० ॥ कालक्षेपाय वर्त्तन्ते
श्रवणे मे ऽनुवर्त्तिते । संस्काराच्चेन मे को ऽपि कर्त्तव्यांशो
न विद्यते ॥ ६११ ॥ सत्यमुत्पद्यते ज्ञानं प्रत्यक्षं तत्त्वमादितः।
नियमाद्यैरुपेतस्य संसारं प्रजिहासतः ॥ ६१२ ॥ तात्कालिके
च मनने समाधाने स्थिते सति । कृतोपासनया लब्धचित्तै-
काग्र्यस्य धीमतः ॥ ६१३ ॥ मुख्याऽधिकारिणश्चित्ते सकृ-
त्सौदामिनीनिभे । सविलासाऽज्ञाननाशनिदानं ब्रह्मवेदन-
म् ॥ ६१४ ॥ तस्याऽन्तरङ्गनियमयमादेरनुवर्त्तनम् । सिद्धस्य
लक्षणान्येवं ह्यनुष्ठेयानि साधकैः ॥ ६१५ ॥ त्वयि सिद्धे
स्युरेतानि न चेद्भज्येत सिद्धता । बादरायणसूत्रं च भज्येत
विदुषामपि ॥ ६१६ ॥ चर्या तद्बोधिका तद्वच्छान्तो दान्त इति
श्रुतिः । किं च पातञ्जलं सूत्रं नियमप्रतिपादकम् ॥ ६१७ ॥
भज्येत तद्योगिनां स्यान्नाऽस्माकमिति चेन्न तत् । योगित्वं
परहंसानां परहंसश्रुतिर्जगौ ॥ ६१८ ॥ किं च सिद्धः कदा
चित्तु कूतूहलपरो यदि । रमते ऽध्यात्मशास्त्रे ऽसौ परानन्दे
तु निराशः ॥ ६१९ ॥ मुक्त्वा ग्रन्थादिकं चित्तं क्षणमात्रमसं-
स्थितम्। अशुद्धं तेन सिद्धं ते गता मुख्याऽधिकारिता ॥६२०॥
मन्दाऽधिकारिणो जातं परोक्षं ज्ञानमीदृशा । वार्त्तया भ्राम्यसे
लोकानपरोक्षमतेर्भवान् ॥ ६२१ ॥ तस्माज्ज्ञानित्वमौनित्व-

साधनैः सहितो भवान् । संसृज्य विद्वत्संन्यासात् पूर्वत्यागप्रयोजनात् ॥ ६२२ ॥ विश्रान्तिफलकादन्यदण्डवस्त्रघटादिकम् । अपरोक्षधियै बाल्यमौनित्वादिकमादरात् ॥ ६२३ ॥ कुरु यावच्छलावत्तो स्थितिः स्यात्परमे सुखे । सप्तमी भूमिका नाम्ना तावत्कर्त्तव्यता दृढा ॥ ६२४ ॥ कर्त्तव्यता स्वतो गच्छेत्पश्चाद्वातादिवाऽम्बरम् । आदावभ्यासकाले तु बहिर्विषयिणी हि सा ॥ ६२५ ॥ वर्तते साधको ऽप्येवमकर्त्ता ऽस्मीति चिन्तयेत् । ततः परोक्षं निश्चित्य स्वात्मनो ब्रह्मरूपताम् ॥६२६॥ संगृह्य सारविच्छास्त्रे मेधावी हृदि धारयेत् । ग्रन्थान् सन्त्यज्य विज्ञानतत्परः स्यादतन्द्रितः ॥ ६२७ ॥ कर्त्तव्यतां त्यजेद्विद्वानबाह्यविषयामपि । ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ॥ ६२८ ॥ पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः । पुस्तके यदि वाञ्छा स्यादवधूतस्य तच्छ्रुतम् ॥ ६२९ ॥ पुस्तकं हि मनोदण्डं करपात्रं दिगम्बरम् । धृत्वा परिव्रजेत्तूर्णमिति शास्त्रविनिश्चयः ॥ ६३० ॥ इति तार्किकं समुद्धर्तुं ब्रह्मज्ञानं ससाधनम् । संसृजेत्तारकं पूर्वं चिन्तितं बन्मया ऽधुना ॥६३१॥ तज्ज्ञानमुपदेक्ष्यामि तार्किकं पुरतः स्थितम् । पूतं मत्वोक्तरीत्या ऽसौ योगी त्वेवममन्यत ॥ ६३२ ॥ भवदोषधिया हृदये विरक्तिर्जायते ततः । शुद्धे चित्ते विविदिषा संन्यासः सर्वकर्मणाम् ॥ ६३३ ॥ त्यागात्संजायते ज्ञानमितिस्थितं तथाविधम । भवशेषमुखग्रस्त कुतर्कविषमस्तकम् ॥ ६३४ ॥ कुकलासं यथा कृष्णो गजराजं यथा हरिः । स्वभक्तं तस्य भक्तो ऽहमभक्तमपि तारये ॥ ६३५ ॥ कथं भक्तिर्भगवति ह्यद्वितीयं विजानतः । भजनाद्भक्तिरित्युक्तिर्निर्गुणे सगुणे ऽपि च॥६३६॥ प्रवर्तन्ते ततो मोहस्त्यज्यतामज्ञतज्ज्ञयोः । अनुवृत्तिर्ज्ञानिनि स्यात्

क्षमादिवदिति श्रुतम् ॥ ६३७ ॥ सनकादेर्नारदस्य वैकुण्ठगमनादिकम् । शुकादीनां रतिः कृष्णकथायां विद्यते शुभम् ॥ ६३८ ॥ यावदायुस्त्रयो वन्द्या वेदान्ता गुरुरीश्वरः । आदौ विद्याप्रसिद्ध्यर्थं कृतघ्नत्वाऽपनुत्तये ॥ ६३९ ॥ आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥६४०॥ देहेन्द्रियं प्राणमनोधियां यो जन्माप्ययः क्षुद्भयतर्षकृच्छ्रैः । संसारधर्मैरविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः ॥ ६४१ ॥ न कामकर्मबीजानां दृश्यते यत्र सम्भवः । वासुदेवैकनिलयः स वै भागवतोत्तमः ॥ ६४२ ॥ शिवे च परमेशाने विष्णौ च परमात्मनि । समबुद्ध्या प्रवर्त्तन्ते ये ते भागवतोत्तमाः ॥ ६४३ ॥ भुवनविभवहेतवेऽप्यकुण्ठस्मृतिरजितात्मसुरादिभिर्विमृग्यात् । न चलति भगवत्पदारविन्दाल्लवनिमिषार्धमसौ हि वैष्णवाग्र्यः ॥ ६४४ ॥ अतः परमभक्तोऽहं विषघ्न स्मृतिसंमतम् । युक्त्यौषधञ्च पथ्यं च वेदमन्त्राऽभिमन्त्रणम् ॥ ६४५ ॥ कुर्वे मुनिः क्षणादेवमुक्तोऽस्त्विति तथाऽकरोत् । सदेवाऽऽसीदिदं सर्वं शुक्तिवद्रज्जुसर्पवत् ॥ ६४६ ॥ विजृम्भते ते मूर्द्धा तु पतेन्न मनुषे यदि । भगवंस्तत्र तत्राऽहं सभार्यां ताडनाद्भयात् ॥ ६४७ ॥ पलायन्नागतोऽत्रापि गुहायां वृश्चिकाद्यथा । नित्यमेवं मानदोषात्सङ्गतो दर्शनाद्धि वः ॥ ६४८ ॥ कृतकृत्योऽस्मि शिष्यं मामनुशाधि यथाविधि । सन्त्यज्य दुर्मतं वेदशिरस्त्वं शरणं व्रज ॥ ६४९ ॥ उपदिष्टो मया न्यायो गृह्यतां श्रुतिसंमतः । भूयोपि वच्मि ते सृष्टिं सावधानमनाः शृणु ॥६५०॥ अद्वितीयपरानन्दपरमात्मा स्वमायया । युक्तोऽसत्कल्पया योगी यथा व्याघ्रस्तथेश्वरः ॥ ६५१ ॥ सर्वप्रपञ्चरूपेण कूटस्थो

ऽभूत्स्वयंप्रभः । इममर्थमभिप्रेत्य बालेभ्यः श्रुतिरब्रवीत् ॥६५२॥
सूक्ष्मात् स्थूलं समुत्पन्नमिति चेच्चूलपिण्डतः । तन्तुरज्ज्वोश्च
वस्त्राणि विस्तृतानीक्षसे न किम् ॥ ६५३ ॥ अतो मृग्यं प्र-
माणं ते परमाण्वादिकल्पने । किं चाऽन्यत्परमाणूनां संयोगो
निष्प्रयोजकः ॥ ६५४ ॥ तदभावे कुतो विश्वमीशश्चेत्सो
ऽप्यसम्भवी । संसारी स्याच्चेतनश्चेत् कुलालवदचेतनः ॥६५५॥
यदि तत्र प्रवर्त्तेत जडत्वात्तर्हि कुम्भवत् । अनवस्था ऽप्यथे-
शस्तु सर्वसंसारवर्जितः ॥ ६५६ ॥ सर्वज्ञः सम्भवत्येव कार्य-
लिङ्गाऽनुमानतः । इदं विचित्रकार्यत्वात्प्रासादादिव मान-
तः ॥ ६५७ ॥ नानाकर्तृत्वसिद्ध्या ऽसौ सर्वज्ञः स्यात्कथं
तव । आगमादिति चेदीशः सर्वज्ञः सर्वकारणम् ॥ ६५८ ॥
शोभते भवतः श्रद्धा कूटस्थे परमेश्वरे । अद्वितीयः परानन्दो
महामायो महेश्वरः ॥ ६५९ ॥ विश्वकर्ता विश्वयोनिरागमा-
देव गम्यते। किं च रूपस्पर्शवत्त्वान्मितत्वाच्च घटादिवत्॥६६०॥
अणवः स्युरनित्यास्ते न ततो मूलकारणम् । किं च सांशेषु
संयोगस्तन्त्वादिष्वेव दृश्यते ॥ ६६१ ॥ अव्याप्यवृत्तिरणुषु
निरंशेषु कथं भवेत् । व्याप्यवृत्तौ तु संयोगे प्रथिमा द्व्यणु-
कादिषु ॥ ६६२ ॥ कथ सङ्गच्छते तत्र स्थूलत्वाऽनुभवः क-
थम् । गुणस्य गुणिना साकं समवायो ऽभिधीयते ॥ ६६३ ॥
सो ऽपि सम्बन्धिना साकं सम्बन्धो यदि नेष्यते । तदा वि-
शिष्टधीहेतुर्न स्यादेव खपुष्पवत् ॥ ६६४ ॥ सम्बध्येत यदा
तस्य सम्बन्धान्तरमिष्यताम् । तस्य तस्याऽन्यसम्बन्धो ह्यन-
वस्थैवमापतेत् ॥ ६६५ ॥ संयोगस्य गुणत्वेन संबन्धान्तरमि-
ष्यते । सबन्धः समवायस्य न स्यादेवाऽगुणत्वतः ॥ ६६६ ॥
समवायो दीपवत्स्यात् स्वस्वेतरनियामकः । अतो विशिष्ट-

धीहेतुर्गुणस्य गुणिना सह ॥ ६६७ ॥ इत्येवं परिभाषेयं भवता कुत्र शिक्षिता । किं चान्यज्जायते कुम्भ इत्यादौ दृश्यते जनिः ॥ ६६८ ॥ सकर्तृका जनिः सेयमसत्कार्ये कथं भवेत् । किं चाऽन्यद्वैतमस्यापि स्मृत्या ब्रह्मैव शिष्यते ॥ ६६९ ॥ यथोपनिषदस्तत्त्वप्रधाना न तथा मतम् । इद शास्त्रं मत न्यायप्रधानमिति भाष्यकृत् ॥ ६७० ॥ तस्माद्ब्रह्म माहामायं जगतः कारणं ध्रुवम् । न्यायताऽऽलम्बने भग्ने तत्त्ववित्कृष्णा लीलया ॥ ६७१ ॥ नैयायिकवरेणाऽधः पातिताचालपादपात् । पतेदन्यस्ततो ऽप्यन्य एवमन्योन्यताडनैः ॥ ६७२ ॥ अद्वैतफलमस्त्यर्थं यत्साक्षादपरोक्षतः । सिद्धं गोरक्षक पूपं भुञ्जता ऽनिशमादरात् ॥ ६७३ ॥ अतः सच्चित्सुखं ब्रह्म स्वप्रकाशं निरञ्जनम् । अद्वितीय निर्विशेषं भवानेव न संशयः ॥ ६७४ ॥ न तु ब्रह्माऽहमस्म्येव तथापि मम चेतसि । विक्षेपा उद्भवन्त्येव तच्छान्तिः स्यात्कथ मम ॥ ६७५ ॥ यथा चित्तं प्रशाम्येत भण्यतां यदि रोचते । सत्यं तत्त्वविदोऽप्येवमविश्रान्तिनिबन्धनाः ॥ ६७६ ॥ विक्षेपा उद्भवन्त्येव ब्रह्माऽऽत्मज्ञानिनामपि । योगसंस्काररहितं विकल्पैः स्वाश्रयं मनः ॥ ६७७ ॥ क्षोभयित्वा स्वप्रचारे नयेद्ध्यानिवाऽनिलः । एवमेव शुको ब्रह्म ज्ञात्वा विक्षिप्तचेतसा ॥ ६७८ ॥ चलितो जनकेनोक्तो विश्रान्त इति विश्रुतम् । तस्माद्विक्षेपशान्त्यर्थं जीवन्मुक्तिसुखाय च ॥ ६७९ ॥ जीवन्मुक्तेः साधनानि साधय त्वं प्रयत्नतः । जीवन्मुक्तिः केयमत्र किं प्रमाणं कथं भवेत् ॥ ६८० ॥ तत्सिद्धिः किं फलं तस्या इति चेदुच्यते शृणु । जीवतो विदुषश्चित्ते संभवेत्कर्तृतादिकम् ॥ ६८१ ॥ क्लेशरूपतया बन्धः कथ्यते ब्रह्मवादिभिः । तन्निवारणरूपात्मा

जीवन्मुक्तिः प्रकीर्त्यते ॥ ६८२ ॥ नन्वयं साक्षिणो बन्धो वार्यते मनसो ऽथ वा । नाऽऽद्यो ज्ञानेन तस्याऽयं वारितत्वात्पुनः कथम् ॥ ६८३ ॥ नोत्तरश्चित्तधर्मत्वात् सति चित्ते न वारणम् । न ह्यग्नेरुष्णता तोयात्स्यात्स्यैन वा तेन वार्यते॥६८४॥ जलार्द्रता मृत्तिकाद्यैरग्न्यौष्ण्यं मणिमन्त्रतः । यथा ऽभिभूयते तद्वच्चित्तधर्मो ऽभिभूयते ॥ ६८५ ॥ योगाऽभ्यासेन नन्वेवं प्रारब्धं योगसिद्धये । चित्तवृत्तीरपेक्षेत कथं योगात्तदक्षयः ॥ ६८६ ॥ उक्ताऽभिभवसाध्याया जीवन्मुक्तेः सुखत्वतः । प्रारब्ध फलएवाऽन्तर्भावाच्छङ्का न संभवेत् ॥ ६८७ ॥ प्रारब्धमथ वा ज्ञानात्प्रबलं मनुषे यथा । प्रारब्धादपि योगस्तु प्रबलः स्यात्तथा सति ॥ ६८८ ॥ वीतहव्योद्दालकादेर्देहसंत्यागदर्शनात् । स्वेच्छयैवोपपन्न स्याद् यद्यप्यल्पायुषां नृणाम् ॥ ६८९ ॥ न चास्ति तादृशो योगस्तथा ऽप्येषा प्रयत्नतः । कामादीनां निरोधाख्यमात्रं योगो ऽस्तु का क्षतिः ॥ ६९० ॥ तस्माद्योगाऽभ्यासवशात्कामाद्यभिभवे सति । जीवन्मुक्तिर्भवेत्तत्र विवादो नैव विद्यते ॥ ६९१ ॥ जीवन्मुक्तौ प्रमाणानि श्रुतयः स्मृतयस्तथा । एवं सचक्षुरित्याद्याः श्रुतयस्ते ऽत्र भूरिशः ॥ ६९२ ॥ जीवन्मुक्तिस्थितिः प्राज्ञब्राह्मणाद्यभिधानतः । जीवन्मुक्तिस्तत्र तत्र वासिष्ठादौ निरूप्यते ॥ ६९३ ॥ तत्स्वरूपे मानमुक्तं तत्साधनमथोच्यते । प्रत्यग्ब्रह्माऽऽत्मविज्ञानं विद्वन्न्यासपरीक्षया ॥ ६९४ ॥ वासनानां मनोनाशो जीवन्मुक्तेस्तु साधनम् । विद्वन्न्यासो याज्ञवल्क्यप्रमुखैर्मुनिभिः कृतः ॥ ६९५ ॥ याज्ञवल्क्यः प्रवव्राजेत्येवमादौ प्रतीयते । कहोलब्राह्मणे ऽप्येतं वै तमात्मानमित्यतः ॥ ६९६ ॥ वाक्यान्न्यासो याज्ञवल्क्यैः कथितो

विदुषां ननु । उक्तोपि विदुषां न्यासो नैवाऽज्ञानस्य गम्यते॥६९७॥ क्त्वाप्रत्ययेन संन्यासहेतुत्वमितरस्ततः । शारीरके ब्राह्मणे ऽपि संन्यासावुदितावुभौ ॥ ६९८ ॥ एतमेव विदित्वेति लोकमिच्छन्त इत्यतः । मुनित्वमत्र मननशीलत्वं तन्न सिध्यति ॥६९९॥ कर्त्तव्यान्तरतासत्त्वे त्वर्थान्मानान्तरं भवेत् । प्रलोभयित्वा नन्वत्र मुनित्वेन फलेन तु ॥ ७०० ॥ विधीयते विविदिषा न्यासोयं नेतरः पृथक् । ज्ञानं विविदिषा न्यासफलं न मुनिता ननु ॥ ७०१ ॥ ज्ञानमेव मुनित्वं स्यात् मैवं साधनसाध्यता । गम्यते त्वाप्रत्ययेन कथमैक्य तयोर्भवेत् । परिपाको ब्रह्मबुद्धेर्मुनित्वं ज्ञानपूर्वकम् ॥ ७०२ ॥ प्रयोजनं विविदिषा न्यासस्याऽस्त्विति चेच्छृणु । विद्वन्न्यासः फलीभूतसंन्यासान्तरमिष्यते ॥ ७०३ ॥ ज्ञानहेतुर्विविदिषा सन्यासादनयोः पुनः । सलिङ्गता ऽलिङ्गता चेत्येवं भेदः श्रुतौ श्रुतः ॥ ७०४ ॥

असौ स्वपुत्रमित्रकलत्राऽऽप्तबन्धवादीनग्नीन् स्वाध्यायं च सर्वकर्माणि संन्यस्य अमुं ब्रह्माण्डं च हित्वा कौपीनं दण्डमाच्छादनं च स्वशरीरोपभोगार्थाय लोकस्योपकारार्थय च परिग्रहेत् ।तच्च न मुख्यो ऽस्ति । को ऽयं मुख्य इति चेदयं मुख्यो न दण्ड न यज्ञोपवीतं नाच्छादनं चरति परमहंसः ।

तथापि परहंसत्वं तुल्यसङ्ख्या न बाधते । यतिर्विविदुषुः सम्यक्छ्रवणादिकमभ्यसेत् ॥ ७०५ ॥ मनस्तद्वासनात्यागं यतिर्विद्वान् समभ्यसेत् । त्रिदण्डिनो विविदिषान्यासं सम्यग्विधाय च ॥ ७०६ ॥ विद्वन्न्यासं फलीभूतं जाबालश्रुतिरब्रवीत् । वसिष्ठोक्तेर्वासनायाः स्वरूपमभिधीयते ॥ ७०७ ॥ दृढभावनया त्यक्तपूर्वाऽपरविचारणम् । यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥७०८॥ भावित तीव्रसवेगादात्मना यत्त-

देव सः । भवस्त्वाशु महाबाहो विगतेतरसंस्मृतिः ॥ ७०९ ॥ तादृग्रूपो हि पुरुषो वासनाविवशीकृतः । सम्पश्यति यदैवैतत् सिद्धास्त्विति विमुह्यति ॥ ७१० ॥ वासनावेगवैवश्यात् स्वरूपं प्रजहाति तत् । भ्रान्तं पश्यति दुर्दृष्टिं सर्वं मदवशादिव ॥७११ लोकवासनया जन्तोः शास्त्रवासनया ऽपि च । देहवासनया ज्ञानं जिज्ञासा नैव जायते ॥ ७१२ ॥ उत्पन्नं ब्रह्मविज्ञानं विदुषो न प्रतिष्ठितम् । तदेवमासुरी दैवी वासना द्विविधा मता ॥ ७१३ ॥ शरीरवासना लोकवासना शास्त्रवासना । मलिनास्तिस्र आसुर्यो विशयायैव वासनाः ७१४ ॥ चतसृणां वासनानां क्षयः कार्यो विवेकिता । नन्वमूर्तत्वतस्तासां क्षयः कर्तुं न शक्यते ॥ ७१५ ॥ भुजिक्रियाया निद्राया अमूर्त्ताः क्षयौ मतौ । विरोधभूतोपवासजागरौ यत्नपूर्वकौ ॥ ७१६ ॥ लोके दृष्टौ तथा ऽत्रापि वासनानां क्षयो भवेत् । अद्य स्थित्वा निराहारः श्वोभूतइति मन्त्रतः ॥७१७॥ संकल्प्य सविधानेन स्थितौ त्यागस्तयोर्यदि । प्रैषमन्त्रेण सकल्प्य प्रकुर्वे ऽप्यप्रमादतः ॥ ७१८ ॥ अवस्थानेन तत्त्यागः कर्तुं शक्यो मनीषिभिः । सूपौदनादिसान्निध्यत्यागस्तत्र यदीष्यते ॥ ७१९ ॥ स्रक्चन्दनादिसांनिध्यत्यागो ऽत्रापि विवक्ष्यताम् । पुराणश्रवणाच्चित्तलालनं यदि मन्यसे ॥ ७२० ॥ मैत्र्यादिना तथा ऽत्रापि लालयेच्चित्तबालकम् । बन्धो हि वासना बन्धमोक्षः स्याद्वासनाक्षयः ॥ ७२१ ॥ वासनां त्वं परिसज्य मोक्षार्थित्वमपि त्यज । मानसीर्वासनाः पूर्वं त्यक्त्वा विषयवासनाः ॥ ७२२ ॥ मैत्र्यादिभावनां सम्यग् गृहाणाऽमलवासनाम् । ता अप्यतः परित्यज्य ताभिर्व्यवहरन्नपि ॥७२३॥ अन्तः शान्तसमस्तेहो भव चिन्मात्रवासनः । तामप्यथ परि-

त्यज्य मनोबुद्धिसमन्विताम् ॥ ७२४ ॥ शेषे स्थिरसमाधाने ये न त्यजसि ते त्यज । विवेकाऽक्षनिरोधाभ्यां स्वभ्यस्ताभ्यां मुहु-र्मुहुः ॥ ७२५ ॥ मैत्र्यादिभावनास्वासु सुस्थिरास्वखिलासु च । क्षीयन्ते वासनायत्नमन्तरा श्वासवत्सदा ॥ ७२६ ॥ अत्रस्थिता-भिर्मैत्र्यादिभावनाभिरयं यतिः । लोके व्यवहरन् हर्षविषा-दान् संपरित्यजन् ॥ ७२७ ॥ मनोरथाऽऽलस्यनिद्रास्त्यक्त्वा चिन्मात्रवासनाम् । कुर्याच्चिद्वासना नाम चिन्मात्रमिति भाव-ना ॥ ७२८ ॥ चिज्जडोभयरूपेण भासते निखिलं जगत् । उपादानतया चिच्च मृद्वत्स्यादनुयायिनी ॥ ७२९ ॥ भासते निखिल चेदं जगच्चैतन्यपूर्वकम् । तमेव भान्तमित्यादिश्रुत्या सर्वं जडात्मकम् ॥ ७३० ॥ उपेक्ष्य चित्तं चिन्मात्रं वासये-त्सा ऽपि वासना । संपाद्या श्वासवद्यावत्तावत्स्वाभाविकी दृढा ॥ ७३१ ॥ तस्माच्चिद्वासनास्थित्यै मलिना सुखवासना । विनाशनीया मैत्र्यादिवासनाभिः प्रयत्नतः ॥ ७३२ ॥ निवृत्ते सर्वयत्ने तु मलिना वासना यथा । निवर्तते यथा शुद्धवासनाः क्षीणतां ययुः ॥ ७३३ ॥ वासनायां निवृत्तायां सर्वस्यां गत-वासनम् । मनो ऽवतिष्ठते बुद्धसत्त्वं विगतकल्मषम् ॥ ७३४ ॥ तस्माद्वासनया बद्धं मुक्तौ निर्वासनं मनः । राम निर्वासनी-भावमाहराऽऽशु विवेकतः ॥ ७३५ ॥ सम्यगालोचनात्सत्या-द्वासना प्रविलीयते । वासनाविलये चेतः शममायाति दीप-वत् ॥ ७३६ ॥ यो जागर्ति सुषुप्तिस्थो यस्य जाग्रन्न विद्य-ते । यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥ ७३७ ॥ सुषुप्तिवत्प्रशमितभाववृत्तिना स्थितः सदा जाग्रति येन चेतसा । कलाऽन्वितो विधुरिव यः सदा बुधैर्निषेव्यते मुक्त इतीह स स्मृतः ॥ ७३८ ॥ हृदयात्संपरित्यज्य सर्वमेव महामतिः ।

यस्तिष्ठति गतव्यग्रः स मुक्तः परमेश्वरः ॥ ७३९ ॥ समाधिमथ कर्माणि मा करोतु करोतु वा। हृदयेनाऽस्तसर्वास्थो मुक्त एव न संशयः ॥७४०॥ नैष्कर्म्येण न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः। न समाधानजप्याभ्यां यस्य निर्वासनं मनः ॥ ७४१ ॥ विचारितमलं शास्त्रं चिरमुद्ग्राहितं मिथः। संत्यक्तवासनान्मौनादृते नास्त्युत्तमं पदम् ॥ ७४२ ॥ निर्वासनमनस्कस्य कथं जीवनकारणम्। व्यवहारो भवेत्किं वा चाक्षुषो लुप्यतेऽथ वा ॥ ७४३ ॥ मानसो वा तत्र नाद्य उद्दालकनिराकृतः। वासनाहीनमप्येतच्चक्षुरादीन्द्रियं स्वतः ॥७४४॥ प्रवर्त्तते बहिः स्वार्थे वासना नाऽत्र कारणम्। द्वितीयस्तु वसिष्ठेन प्रतिषिद्धो महात्मना ॥ ७४५ ॥ अफलोपनतेष्वक्ष्यादीन्द्रियेषु यथा पुनः। नीरागमेव पतति तद्वत्कार्येषु धारधीः ॥ ७४६ ॥ वासनाक्षय उक्तोऽथ मनसोऽप्ययमुच्यते। अशेषवासनानाशे मनो यद्यपि नश्यति ॥ ७४७ ॥ तथापि वासनात्यागरक्षार्थे पृथगीर्यते। सहस्राङ्कुरशाखस्य फलपल्लवशालिनः ॥७४८॥ अस्य संसारवृक्षस्य मनो मूलमिति स्थितम्। संकल्पमेव तं मन्ये संकल्पोपशमेन तु ॥७४९॥ शोषयामि यथा शोषमेति संसारपादपः। प्रबुद्धोऽस्मि प्रबुद्धोऽस्मि दुष्टश्चौरो मया ऽऽत्मनः ॥७५०॥ मनो नाम निहन्म्येनमनेनाऽस्मि चिरं हृतः। अस्य संसारवृक्षस्य सर्वोपद्रवशालिनः ॥ ७५१ ॥ उपाय एक एवाऽस्ति मनसस्तस्य निग्रहः। मनसो ह्युदयो नाशो मनोनाशो महोदयः ॥ ७५२ ॥ ज्ञमनो नाशमभ्येति मनोऽज्ञस्य हि शृङ्खला। तावन्निशीथवेताला वल्गन्ति हृदि वासनाः ॥ ७५३ ॥ एकतत्त्वदृढाऽभ्यासाद् यावन्न विजितं मनः। प्रक्षीणचित्तदर्पस्य निगृहीतेन्द्रियद्विषः ॥ ७५४ ॥ पद्मिन्य इव हेमन्ते क्षीयन्ते

भोगवसानाः । हस्तं हस्तेन संपीड्य दन्तैर्दन्तान्विचूर्ण्य च। अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मनः ॥ ७५५ ॥ एतावति धरणितले सुभगास्ते सन्तु चेतनाः पुरुषाः। पुरुषकथासु च गुण्या न जिता ये चेतसा स्वेन ॥ ७५६ ॥ हृदयबिले कृतकुण्डलोल्बणकलनाविषो मनोभुजगः । यस्योपशान्तिमगमदुदितोन्नतशान्तिमव्ययं वन्दे ॥ ७५७ ॥ चित्तं नाभिः किलाऽस्येह मायाचक्रस्य सर्वतः । स्थीयते चेत्तदाक्रम्य तेन किं चित्प्रबोधतः ॥ ७५८ ॥ मनसो निग्रहाऽऽयत्तमभयं सर्वयोगिनाम्। दुःखक्षयः प्रबोधश्चाप्यक्षया शान्तिरेव च ॥ ७५९ ॥ चञ्चल हीति वचन हठयोगैकगोचरम्। उपविश्योपविश्यैव चित्तेकेन मुहुर्मुहुः ॥ ७६० ॥ न शक्यते मनो जेतुं विना युक्तिमनिन्दिताम्। अङ्कुशेन विना जेतुं यथा दुष्टमतङ्गजः ॥७६१॥ अध्यात्मविद्याऽधिगमः साधुसङ्ग एव च । वासनासंपरित्यागः प्राणस्पन्दनिरोधनम् ॥ ७६२ ॥ एतास्ता युक्तयः पुष्टाः सन्ति चित्तजये किल। सतीषु युक्तिष्वेतासु हठान्नियमयन्ति ये। ततस्ते दीपमुत्सृज्य तमो घ्नन्ति तमोञ्जनैः ॥ ७६३ ॥ विमूढाः कर्तुमुद्युक्ता ये हठाच्चेतसो जयम्। ते निबध्नन्ति नागेन्द्रमुन्मत्तं बिसतन्तुभिः ॥ ७६४ ॥ चक्षुर्वाक्श्रोत्रजिह्वादीं स्तत्तत्स्थानोपरोधतः। निगृह्यते हठाद्यद्वत्तद्वच्चेतोनिरोधनम् ॥७६५॥ करिष्यामीत्ययुक्त तत्र किं तु योग्यः स एव हि। य एव पण्डितः प्रोक्तः सोपायक्रमनिग्रहः ॥ ७६६ ॥ अध्यात्मविद्याप्रमुखा उपाया ईरिता बुधैः । प्राणस्पन्दो वासना च चितस्य प्रेरके उभे ॥ ७६७ ॥ तयोर्निरोधे चित्तं तु प्रशमं याति तत्क्षणात् । वासनाप्राणयोश्चित्तप्रेरकत्वं न केवलम् ॥ ७६८ ॥ अन्योन्यप्रेरकत्वं च वासनाप्राणयोर्मतम्। वा-

८

सनावशनः प्राणस्पन्दस्तेन च वासना ॥ ७६९ ॥ क्रियते चित्तबीजस्य तेन बीजाङ्कुरक्रमः । तयोरन्यतरस्यैव नाशेनोभयनाशनम् ॥ ७७० ॥ द्वे बीजे राम चित्तस्य प्राणस्पन्दनवासने । एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः ॥ ७७१ ॥ तयोर्विनाशने हेतुः फल च कथितं बुधैः । प्राणाऽऽयामदृढाभ्यासैर्युक्त्या च गुरुदत्तया ॥ ७७२ ॥ आसनाऽशनयोगेन प्राणस्पन्दो निरुध्यते । असङ्गव्यवहारित्वाद् भवभावनवर्ज्जनात् ॥ ७७३ ॥ शरीरनाशदर्शित्वाद् वासना न प्रवर्तते । वासनासंपरित्यागात् चित्त गच्छत्यचित्तताम् ॥ ७७४ ॥ प्राणस्पन्दनिरोधाच्च यथेच्छसि तथा कुरु । एतावन्मात्रकं मन्ये रूप चित्तस्य राघव ॥ ७७५ ॥ यद्भावनं वस्तुनो ऽन्तर्वस्तुत्वेन रसेन च । यदा न भाव्यते किं चिद्धेयोपादेयरूपि यत् ॥ ७७६ ॥ स्थीयते सकलं त्यक्त्वा तदा चित्तं न जायते । अवासनाद्वा सततं यदा न मनुते मनः ॥ ७७७ ॥ अमनस्ता तदोदेति परमोपशमप्रदा । तस्याश्चाऽनुदये वक्ति शान्त्यभावं मुनिः स्वयम् ॥ ७७८ ॥ चित्तक्षयदृढाऽऽक्रान्तं न मित्राणि न बान्धवाः । शक्नुवन्ति परित्रातुं गुरवो न च मानवम् ॥ ७७९ ॥ लक्ष्मोपायं फलं चाऽऽह त्वासनस्य पतञ्जलिः । उक्ताऽऽसनस्य देशो ऽपि श्रुतिस्मृत्यादिषु श्रुतः ॥ ७८६ ॥ तथैवाऽऽसनयोगो ऽपि मिताहारादिसेवनम् । अत्याहारमनाहारमित्यस्यां श्रूयते श्रुतौ ॥ ७८७ ॥ नाऽत्यश्नतस्तु योगो ऽस्ति न चैकान्तमनश्नतः । न चाऽतिस्वप्नशीलस्य जाग्रतो नैव चाऽर्ज्जुन ॥ ७८८ ॥ युक्ताऽऽहारविहारस्य युक्तचेष्टस्य कर्मसु । युक्तस्वप्नाऽवबोधस्य योगो भवति दुःखहा ॥ ७८९ ॥ प्राणपीडनवाक्योक्तप्रकारो ऽन्यत्र विश्रुतः । सव्याहृतिं सप्रणवां गायत्रीं शि-

रसा सह ॥ ७९० ॥ त्रिः पठेदायतप्राणः प्राणायामः स उच्यते । प्राणायामास्त्रयः प्रोक्ता रेचपूरककुम्भकाः ॥७९१॥ उत्क्षिप्य वातमाकाशं शून्यं कृत्वा निरात्मकम् । शून्यभावेन युञ्जीयाद् रेचकस्येति लक्षणम् ॥ ७९२ ॥ वक्त्रेणोत्पलनालेन तोयमाकर्षयेन्नरः । एवं वायुर्ग्रहीतव्यः पूरकस्येति लक्षणम् ॥ ७९३ ॥ नोच्छ्वसयान्न च निःश्वस्यान्नैव गत्राणि चालयेत् । एक भावं नियुञ्जीयात्कुम्भकस्येति लक्षणम् ॥७९४॥ बाह्याऽऽभ्यन्तरभेदेन कुम्भको द्विविधः स्मृतः । अपाने ऽस्त गते प्राणो यावन्नाऽभ्युदितो हृदि ॥ ७९५ ॥ तावत्सा कुम्भकाऽवस्था योगिभिर्या ऽनुभूयते । बहिरस्तं गते प्राणे यावन्नाऽपान उद्गतः ॥ ७९६ ॥ तावत्पूर्णा समाऽवस्था बहिःस्थं कुम्भकं विदुः । विश्रामदाद्यासुरीभिर्वामनाभिर्युता ऽयुतौ ॥७९७॥ तत्राऽऽद्यस्याऽभ्यासवशाद् निरुन्धे ऽसौ स्वकं मनः । तन्नान्तरीयकत्वेन लीयते तत्र च श्रुतिः ॥ ७९८ ॥ प्राणान्प्रपीड्येहत्याद्या द्वितीयस्य तु योगिनः । ब्रह्मध्यानेन मनसि निरुद्धे सुनिरोधनम् ॥ ७९९ ॥ तन्नान्तरीयकत्वेन सिद्धोन्मानं त्रिरुन्नतम् । यथा पर्वतधातूनां दह्यन्ते धमनान्मलाः ॥ ८०० ॥ तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात् । यत्प्राणपवनस्पन्दाश्चित्तस्पन्दः स एव हि ॥ ८०१ ॥ प्राणस्पन्दक्षये यत्नः कर्त्तव्यो धमतोच्चकैः । आसनाऽनन्तरं कार्यं प्राणायाममतन्द्रयत् ॥ ८०२ ॥ रेचको बाह्यवृत्तिः स्यात्पूरको ऽन्तरवृत्तितः । कुम्भकः स्तम्भवृत्तिः स्यात् त्रिधायं परिकीर्तितः ॥८०३॥ स्युर्देशकालसंख्याभिः परीक्ष्यास्ते त्रयो मताः । त्रिभ्यस्तु रेचकादिभ्यः प्रकारो ऽन्यस्तु सूत्रितः ॥ ८०४ ॥ तस्मादध्यात्मविज्ञानसाधुसङ्गमवासनाक्षयप्राणनिरोधाः स्युश्चित्तनाशप्र-

वा इमे ॥ ८०५ ॥ क्षिप्तं मूढं च विक्षिप्तं विव्यग्रं मनस-
स्तथा । निरुद्धं चेति पञ्चैता भूमयो योगिनां मताः ॥ ८०६ ॥
आसुरीभिर्लोकशास्त्रवासनाभिः समन्वितम् । क्षिप्तमालस्य-
निद्राद्यैः संमित मूढमुच्यते ॥ ८०७ ॥ कादाचित्कध्यानयुक्त-
तया क्षिप्ताद्विशेषितम् । विक्षिप्तमुच्यते ध्यानैर्विक्षिप्ते नाशिते
सति ॥ ८०८ ॥ विक्षिप्तं तच्च संसारमध्यएवाऽवतिष्ठते । एका-
ग्रे सति यच्चित्तं योगस्तत्त्व प्रकाशयेत् ॥ ८०९ ॥ क्लेशान्
विनाशयेत्कर्मबन्धान् विश्लेषयेत्तथा । निरोधाऽभिमुखं कु-
र्यात्संप्रज्ञातः स उच्यते ॥ ८१० ॥ निरोधे सर्ववृत्तीनामसंप्र-
ज्ञात उच्यते । समाधेस्तस्य चैवाऽष्टावङ्गान्यत्र च पञ्च च ॥ ८११ ॥
बहिरङ्गानि तत्राद्यो यमः सद्भिः प्रकीर्त्तितः । अहिंसा सत्य-
मस्तेयं ब्रह्मचर्यादिलक्षणः ॥ ८१२ ॥ नियमः शौचसन्तोष-
तपआदिः प्रकीर्तितः । वैलक्षण्यमनुष्ठाने स्मर्यते नियमे य-
मे ॥ ८१३ ॥ यमान् सेवेत सततं न नित्यं नियमान् बुधः ।
यमान् पतत्यकुर्वाणो नियमान् केवलान् भजन् ॥ ८१४ ॥
पतति नियमवान् यमेष्वसक्तो न तु यमवान् नियमाऽलसो
ऽवसीदेत् । इति यमनियमौ समीक्ष्य बुद्ध्या यमबहु-
लेष्वनुसन्दधीत बुद्धिम् ॥ ८१५ ॥ अस्माभिरासनप्रा-
णायामौ पूर्वं निरूपितौ । स्वविषयाऽसंप्रयोगे चित्तरूपाऽनुवर्त्त-
नम् ॥ ८१६ ॥ इन्द्रियाणामीर्यते ऽसौ प्रत्याहारो मनीषिभिः ।
चित्तस्य देशबन्धस्तु धारणा परिकीर्तिता ॥ ८१७ ॥ अथ
तत्र प्रत्ययैकतानता ध्यानमुच्यते । एवं तदेवाऽर्थमात्रनिर्भास-
मिति सूत्रितः ॥ ८१८ ॥ समाधिः सूत्रकारेण पतञ्जलिमह-
र्षिणा । आधारादिर्देश उक्तो मुनिभिर्योगवित्तमैः ॥ ८१९ ॥
देशान्तरं तथा ऽन्यत्र श्रूयते योगिसंमतम् । मनः संकल्पकं

ध्यात्वा संक्षिप्यात्मनि बुद्धिमान् ॥ ८२० ॥ धारयित्वा तथाऽऽत्मानं धारणा परिकीर्त्तिता । तत्रैकविषयश्चित्तप्रवाहो ध्यानमुच्यते ॥ ८२१ ॥ एवं विच्छिद्य विच्छिद्य जायमानस्तथेतरः । संततश्चेति तौ ध्यानसमाधी परिकीर्त्तितौ ॥८२२॥ चित्तैकाग्र्याद्यतो ज्ञानमुक्तं समुपजायते । तत्साधनमतो ध्यानं यथावदुपदिश्यते ॥ ८२३ ॥ विलाप्य प्रकृतिं कृत्स्नां सम्भवव्यत्ययक्रमात् । परिशिष्टं च सन्मात्रं चिदानन्दं विचिन्तयेत् ॥ ८२४ ॥ इति प्रदर्शितौ तौ द्वौ सर्वाऽनुभवयोगिना । ब्रह्माऽऽकारमनोवृत्तिप्रवाहाऽहं कृतिं विना ॥ ८२५ ॥ संप्रज्ञातसमाधिः स्याद् ध्यानाऽभ्यासप्रकर्षतः । ननु संप्रज्ञानामासावङ्गी सर्वत्र विश्रुतः ॥ ८२६ ॥ समाधेरष्टमाङ्गस्य कथं स्थानं प्रपद्यते । यथा माणवको वेदमधीयानः स्खलन्नपि ॥ ८२७ ॥ पुनः पुनः समाधत्ते ऽधीतवेदस्तु बालकः । सावधानो न स्खलति वेदस्याऽध्यापको गुरुः ॥ ८२८ ॥ असावधानस्तन्द्र्यादीन् कुर्वन्प्रस्खलति स्वयम् । तथैव विषयैक्ये ऽपि ध्यानादीनां परस्परम् ॥ ८२९ ॥ स्यादेवाऽवान्तरो भेदः परिपाकविशेषतः । एवं च सति पूर्वोक्तो दोष आपद्यते कथम् ॥ ८३० ॥ संप्रज्ञातान्तरङ्गं तु धारणादित्रयं मतम् । संप्रज्ञातादयो भूतभौतिकादिषु वर्शिताः ॥ ८३१ ॥ ते ऽन्तर्धानादिसिद्धित्वात् समाधिं मुक्तिदं प्रति । विरोधिनो न ते ऽस्माभिराद्रियन्ते कथं च न ॥ ८३२ ॥ प्रश्नोत्तराभ्यामप्येवं गम्यते मुनिरामयोः । जीवन्मुक्तशरीराणां कथमात्मविदां वर । शक्तयो नेह दृश्यन्तआकाशगमनादिकाः ॥ ८३३ ॥

वसिष्ठः—अनात्मविदमुक्तो ऽपि नभोविहरणादिकम् । द्रव्यमन्त्रक्रियाकालयुक्त्या ऽऽप्नोत्येव राघव ॥८३४॥ नाऽऽत्म-

ज्ञस्यैष विषय आत्मज्ञोऽध्यात्ममात्रदृक् । आत्मना ऽऽत्मनि संतृप्तो नाऽविद्यामनुधावति ॥ ८३५ ॥ ये के चन जगद्भावास्तानविद्यामयान्विदुः । कथं तेषु किलाऽऽत्मज्ञस्त्यक्ता विद्यां निमज्जति ॥ ८३६ ॥ द्रव्यमन्त्रक्रियाकालयुक्तयः साधुसिद्धिदाः । परमात्मपदप्राप्तौ नोपकुर्वन्ति काश्चन ॥ ८३७ ॥ सर्वेच्छाजालसशान्तावात्मलाभोदयो हि यः । स कथ सिद्धिवाञ्छायां मग्नचित्तेन लभ्यते ॥८३८॥ न के चन जगद्भावास्तत्त्वज्ञं रञ्जयन्त्यमी । नागरं नागरीकान्तं कुग्रामललना इव ॥ ८३९ ॥ अपि शीतरुचावर्के सुतीक्ष्णे ऽपीन्दुमण्डले । अप्यधः प्रसरत्यग्नौ जीवन्मुक्तो न विस्मयी ॥ ८४० ॥ चिदात्मन इमा इत्थं प्रस्फुरन्तीह शक्तयः । इत्यस्याऽऽश्चर्यजालेषु नाभ्युदेति कुतूहलम् ॥ ८४१ ॥ संप्रज्ञातसमाधिस्तु परमात्मैकगोचरः । वासनानां विनाशस्य निरोधस्य च कारणम् ॥ ८४२ ॥ तेन तत्रैव चाऽस्माकमादरो विद्यते सदा । अथेदानीं निरोधाख्यसमाधिरुपवर्ण्यते ॥ ८४३ ॥ सूत्रेणाऽनेन व्युत्थाननिरोधेत्यादिना मया । विरोधिनश्च व्युत्थानसंस्कारा योगसिद्धये ॥ ८४४ ॥ वासिष्ठादौ तत्र तत्र मुनिना परिकीर्तिताः । निरोधहेतोर्यत्नेन प्रसहं च प्रतीक्षणम् ॥ ८४५ ॥ व्युत्थानवासनानां च सञ्जाते ऽभिभवे सति । तथा निरोधसंस्कारप्रादुर्भावे स्थिते सति ॥ ८४६ ॥ निरोधपरिणामो ऽयं समाधिर्मनसो भवेत् । प्रतिक्षणं हि मनसः परिणामो भवेदिति ॥८४७॥ न्यायात्सिद्धमतस्तस्य निरुद्धस्य तु तत्कथम् । सत्यं तस्य विजातीयः परिणामो न जायते ॥ ८४८ ॥ सजातीयनिरोधाख्यात्संस्कारादुद्भवन्ति ते । प्रशान्तवाहितामेनां विस्पष्टं भगवान् जगौ ॥ ८४९ ॥ यदा विनियतं चित्तमात्मन्येवाऽवतिष्ठते ।

निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ ८५० ॥

यथा दीपो निवातस्थ इत्यादि—तद् विद्याद् दुःखसंयोगवियोगमिति वाक्यतः। वृत्तिप्रशमने हेतुः प्रयत्नाऽभ्यासपूर्वकः॥८५१॥ निरोधः स्यात्तदा चित्त संस्कारेणाऽवशिष्यते। उक्तयत्नाऽभ्यासजत्वमब्रवीद् भगवानपि ॥ ८५२ ॥ आत्मसंस्थ मनः कृत्वा न किंचिदपि चिन्तयेत्। यतो यतो निश्चलति मनश्चञ्चलमस्थिरम् ॥ ८५३ ॥ ततस्ततो नियम्यैतदात्मन्येवेति वाक्यतः। अतो ऽतिमात्रतीव्रस्य त्वसंप्रज्ञातनामनि ॥ ८५४ ॥ समाधौ दृढभूमौ स्याच्चित्तस्याऽस्य विनाशनम्। तेन नाशेन चित्तस्य रक्षिते वासनाक्षये ॥ ८५५ ॥ योगिनो ब्रह्मनिष्ठस्य जीवन्मुक्तिः प्रतिष्ठिता। विदेहमुक्तिरेव स्यान्मनोनाशे ऽस्य योगिनः ॥ ८५६ ॥ जीवन्मुक्तिर्न युक्ता स्यान्न प्रश्नोत्तरनिर्णयात्। विवेकाऽभ्युदयाच्चित्ते स्वरूपे ऽन्तर्हिते मुने ॥ ८५७ ॥ मैत्र्यादयो गुणाः कुत्र जायन्ते योगिनां वर। द्विविधश्चित्तनाशो ऽस्ति सरूपो ऽरूप एव च ॥ ८५८ ॥ जीवन्मुक्तौ सरूपः स्यादरूपो ऽदेहमुक्तितः। प्रकृतं गुणसम्भारं समेति बहु मन्यते ॥ ८५९ ॥ सुखदुःखाद्यवष्टब्धं विद्यमानं मनो विदुः। चेतसः कथिता सत्ता मया रघुकुलोद्वह ॥ ८६० ॥ अस्य नाशमिदानीं त्वं शृणु प्रश्नविदां वर। सुखदुःखदशा धीरं साम्यान्न प्रोद्धरन्ति यम् ॥ ८६१ ॥ निःश्वास इव शैलेन्द्रं चित्तं तस्य मृतं विदुः। आपत्कार्पण्यमुत्साहो मदो मान्द्यं महोत्सवः ॥ ८६२ ॥ य नयन्ति न वैरूप्यं तस्य नष्टं मनो विदुः। चित्तपाशाऽभिधानं हि यदा नश्यति राघव ॥ ८६३ ॥ मैत्र्यादिभिर्गुणैर्युक्तं तदा सत्त्वमुदेत्यलम्। भूयोजन्मविनिर्मुक्तं जीवन्मुक्तस्य तन्मनः ॥ ८६४ ॥ सरूपो ऽसौ मनोनाशो जी-

वन्मुक्तस्य विद्यते । अरूपस्तु मनोनाशो यो मयोक्तो रघूद्वह ॥ ८६५ ॥ विदेहमुक्तिरेवाऽसौ विद्यते निष्फलात्मिका । समग्राऽग्र्यगुणाऽऽधारमपि सत्त्वं प्रलीयते । विदेहमुक्तावमले पदे परमपावने ॥८६६॥ संशान्तदुःखमजडात्मकमेकसुप्तमानन्दमन्थरमपेतरजस्तमो यत् । आकाशकोशतनवस्तनवो महान्तस्तस्मिन्पदे गलितचित्तमला विशन्ति ॥८६७॥ तस्मात्सरूपनाशो ऽस्य जीवन्मुक्तेः सुसाधनम् । ज्ञानरक्षा तपस्तद्वद्विसंवादविनाशनम् ॥ ८६८ ॥ दुःखनाशस्तथा ऽऽनन्दसमभिव्यक्तिरिष्यते । प्रयोजनं पञ्चविध जीवन्मुक्तेर्महात्मभिः ॥ ८६९ ॥ ननु मानेन संजाततत्त्वज्ञानस्य बाधनम् । कथं सञ्जायते ज्ञानरक्षा नैव प्रयोजनम् ॥ ८७० ॥ चित्तविश्रान्त्यभावेन संशयादि प्रसज्यते । उत्पन्नतत्त्वज्ञानस्य रामस्य संशयादिकम् ॥ ८७१ ॥ उदाजहार विश्रान्तेः पूर्वं कौशिकयोगिराट् । न राघव तवाऽस्त्यन्यद् ज्ञेयं ज्ञानवतां वर ॥ ८७२ ॥ स्वयैव सूक्ष्मया बुद्ध्या सर्वविज्ञानवानसि । भगवद्व्यासपुत्रस्य शुकस्येव मतिस्तव ॥ ८७३ ॥ विश्रान्तिमात्रमेवाऽत्र ज्ञातज्ञेयो ऽप्यपेक्षते । शुकस्तु स्वयमेवादौ विदित्वा तत्त्वमात्मनः ॥ ८७४ ॥ संशयानः स्वपितरं पृष्ट्वा ऽपि संशयात्पुनः । उपसङ्गम्य जनकं शुक एवमुवाच ह ॥ ८७५ ॥ स्वयमेव मया पूर्वमेतज्ज्ञातं विवेकतः । एतदेव च पृष्टेन पित्रा मे समुदाहृतम् ॥ ८७६ ॥ भवताप्येष एवार्थः कथितो वाग्विदां वर । एष एव च वाक्यार्थः शास्त्रेषु परिदृश्यते ॥ ८७७ ॥ यथा ऽयं स्वविकल्पोत्थः स्वविकल्पपरिक्षयात् । क्षीयते दग्धसंसारो निःसार इति निश्चयः ॥ ८७८ ॥ तत्किमेतन्महाबाहो सत्यं ब्रूहि ममाऽचलम् । ततो विश्रान्तिमाप्नोति चेतसा भ्राम्यता जगत् ॥ ८७९ ॥

नातः परतरः कश्चिन्निश्चयो ऽस्त्यपरो मुने । स्वयमेव त्वया ज्ञातं गुरुतश्च पुनः श्रुतम् ॥ ८८० ॥ अव्युच्छिन्नचिदात्मैकः पुमानस्तीह नेतरत् । स्वसंकल्पवशाद् बद्धो निःसंकल्पाद्विमुच्यते ॥ ८८१ ॥ तेन त्वया स्फुटं ज्ञातं ज्ञेय स्वस्य महात्मनः । भोगेभ्यो ऽप्यरतिर्जाता दृश्याद्वा सकलादिह ॥ ८८२ ॥ प्राप्तं प्राप्तव्यमखिलं भवता पूर्णचेतसा । न दृश्ये पतसि ब्रह्मन् मुक्तस्त्वं मोहमुत्सृज ॥ ८८३ ॥ अनुशिष्टस्तथेत्येवं जनकेन महात्मना । विशश्राम शुकस्तूष्णीं स्वस्थे परमवस्तुनि ॥ ८८४ ॥ वीतशोकभयाऽऽयासो निर्भयश्छिन्नसंशयः । जगाम शिखरं मेरोः समाध्यर्थमनिन्दितम् ॥ ८८५ ॥ तत्र वर्षसहस्राणि निर्विकल्पसमाधिना । देशे स्थित्वा शशामासावात्मन्यस्नेहदीपवत् ॥ ८८६ ॥ अज्ञश्चाऽश्रद्दधानश्च संशयात्मा विनश्यति । नाऽयं लोको ऽस्ति न परो न सुख संशयात्मनः ॥ ८८७ ॥ विपर्ययस्य दृष्टान्तो निदाघः परिकीर्त्तितः । पराशरेण मुनिना तथैवोक्तं महात्मना ॥ ८८८ ॥ मणिमन्त्रौषधाद्वन्हिः सुदीप्तो ऽपि यथेन्धनम् । प्रदग्धुं नैव शक्तः स्यात् प्रतिबद्धस्तथैव च ॥ ८८९ ॥ ज्ञानाऽग्निरपि सञ्जातः सुदीप्तः सुदृढो ऽपि वा । प्रदग्धु नैव शक्तः स्यात्प्रतिबद्धस्तु कल्मषम ॥ ८९० ॥ भावना विपरीता या या चाऽसम्भावना शुक । कुरुते प्रतिबन्धं सा खलु ज्ञानस्य नाऽपरम् ॥ ८९१ ॥ ततो ऽविश्रान्तचित्तस्य संशयादिप्रसङ्गतः । प्रतिबद्धफलं ज्ञानं स्याच्चतो ऽज्ञानलक्षणम् ॥ ८९२ ॥ विश्रान्तचेतसस्तस्य नष्टचित्तस्य धीमतः । प्रपञ्च एव नो भाति संशयादि कुतो भवेत् ॥ ८९३ ॥ जगत्प्रतीतिहीनस्य स्वप्रयत्न विनैव सः । व्यवहारो ऽपीश्वरेण प्रेरितैरसुभिर्भवेत् ॥ ८९४ ॥ छन्दोगा अत

एवैन्द्रं वाक्यं नोपजनं स्मरन् । इदं शरीरं स यथा प्रयोग्य इति चाऽब्रुवन् ॥ ८९५ ॥ देहं विनश्वरमवास्थितमुत्थितं वा सिद्धो न पश्यति यतो ह्यगमस्वरूपम् । दैवादुपेतमथ दैववशादपेतं वासो यथा परिहृत मदिरामदान्धाः ॥ ८९६ ॥ पार्श्वस्थबोधिताः सन्तः पूर्वाऽऽचारक्रमागतम् । आचारमाचरन्त्येव सुप्तबुद्धवदक्षताः ॥ ८९७ ॥ सिद्धो न पश्यतीत्युक्तमाचारं चाचरन्ति च । परस्परविरोधो ऽयं विश्रान्तेस्तारतम्यतः ॥ ८९८ ॥ व्यवस्थया वारणीयस्तारतम्यमपि श्रुतम् । आत्मक्रीडा आत्मरता इत्याद्यायाश्च वाजिनाम् ॥ ८९९ ॥ चत्वारो ऽत्र प्रतीयन्ते ब्रह्मविद्ब्रह्मविद्वरौ । वरीयांश्च वरिष्ठश्च तएते भूमिसप्तके ॥ ९०० ॥ चतुर्थभूमिमारभ्य क्रमाद्भूमिचतुष्टयम् । सम्प्राप्ता इति विज्ञेया समाध्यभ्यासपाटवात् ॥९०१॥ साध्यसाधनरूपेण भूमयः सप्त सन्ति हि । ज्ञप्तिभूमिः शुभेच्छा स्यात् प्रथमा समुदाहृता ॥ ९०२ ॥ विचारणा द्वितीया तु तृतीया तनुमानसा । सत्त्वापत्तिश्चतुर्थी स्यात्ततो ऽसंसक्तिनामिका ॥ ९०३ ॥ पदार्थाऽभावना षष्ठी सप्तमी तुर्यगा स्मृता । स्थितः किं मूढ एवास्मि प्रेक्षेहं शास्त्रसज्जनैः ॥ ९०४ ॥ वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः । शास्त्रसज्जनसंपर्कवैराग्याऽभ्यासपूर्वकम् ॥ ९०५ ॥ सदाचारे प्रवृत्तिर्या प्रोच्यते सा विचारणा । विचारणाशुभेच्छाभ्यामिन्द्रियार्थेष्वरक्तता ॥ ९०६ ॥ यत्र सा तनुतामेति प्रोच्यते तनुमानसा । भूमिकात्रितयाऽभ्यासाच्चित्ते ऽर्थविरतेर्वशात् ॥ ९०७ ॥ सत्त्वात्मनि स्थिते शुद्धे सत्त्वापत्तिरुदाहृता । दशाचतुष्टयाऽभ्यासादसंसर्गकला तु या ॥ ९०८ ॥ रूढसत्त्वचमत्कारा प्रोक्ता ऽसंसक्तिनामिका । भूमिकापञ्चकाऽभ्यासात् स्वात्मारामत-

या भृशम् ॥ १०९ ॥ अभ्यन्तराणां बाह्यानां पदार्थानामभावनम् । परप्रयुक्तेन चिरप्रयत्नेनाऽवबोधनम् ॥ ११० ॥ पदार्थाऽभावना नाम षष्ठी भवति भूमिका । भूमिषट्कचिराऽभ्यासाद् भेदस्याऽनुपलम्भनात् ॥ १११ ॥ यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः । तत्राद्याः साधनान्येव भेदसत्त्वधीयतः ११२ ॥ अत एवैतात्रितयं जाग्रदित्युच्यते बुधैः । यथा वद्भेदबुद्ध्येदं जगज्जाग्रति दृश्यते ॥ ११३ ॥ अद्वैते स्थैर्यमायाते द्वैत तु प्रलयं गते । पश्यन्ति स्वप्नवल्लोकं चतुर्थी भूमिका मता ॥ ११४ ॥ चतुर्थभूमौ निखिलदृश्योपादानवस्तुनः । अद्वितीयस्वभावत्वं निश्चित्य द्वैतवस्तुनः ॥ ११५ ॥ मिथ्यात्वनिश्चयः सो ऽयं स्वप्न इत्यभिधीयते । चतुर्थभूमिकां प्राप्तो योगी तु ब्रह्मविन्मतः ॥ ११६ ॥ पञ्चमीप्रमुखास्तिस्रो जीवन्मुक्तेस्तु भूमिकाः । अवान्तरविशेषाः स्युर्वासिष्ठादौ तथोक्तितः ॥ ११७ ॥ समाधेर्निर्विकल्पस्य त्वभ्यासाल्लब्धजन्मनी । विश्रान्तितारतम्येन जीवन्मुक्तेर्भवन्ति ताः ॥ ११८ ॥ पञ्चमीभूमिगो योगी समाधेर्निर्विकल्पकात् । व्युत्तिष्ठति स्वयं सो ऽयं ब्रह्मविद्वर उच्यते ॥ ११९ ॥ षष्ठीं प्राप्तः परैर्योगी व्युत्तिष्ठति विबोधितः । स ब्रह्मविद्वरीयान् स्यादिति भेदो द्वयोर्मतः ॥ १२० ॥ पञ्चमीभूमिकामेव सुप्तिस्थपदनामिकाम् । शान्ताऽशेषविशेषांशस्तिष्ठत्यद्वैतमात्रके ॥ १२१ ॥ अन्तर्मुखतया नित्यं बहिर्वृत्तिपरो ऽपि सन् । परिश्रान्ततया नित्यं निद्रालुरिव लक्ष्यते ॥१२२॥ कुर्वन्नभ्यासमेतस्या भूमिकाया विवासनः । षष्ठीं गाढसुषुप्त्याख्यां क्रमादत्येति भूमिकाम् ॥१२३॥ यत्र नाऽसन्न सद्रूपो नाऽहं नाऽप्यनहंकृतिः । केवलं क्षीणमनन आस्ते द्वैतैक्यनिर्गतः ॥१२४॥ अन्तः शून्यो बहिः शून्यः

शून्यकुम्भ इवाऽम्बरे । अन्तः पूर्णो बहिः पूर्णः पूर्णकुम्भ इवाऽम्बरे ॥ ६२५ ॥ तुर्याख्यां सप्तमीं भूमिं सम्प्राप्तस्य तु योगिनः । स्वतो वा परतो वा ऽस्ति व्युत्थानं न महात्मनः ॥ ६२६ ॥ स एव योगिनां ब्रह्मविद्वरिष्ठ इतीर्यते । पञ्चमीप्रमुख्ये भूमित्रयरूपे सुसाधिते ॥ ६२७ ॥ जीवन्मुक्तिस्वरूपे तु द्वैतधीपरिवर्जनात् । संशयादेरभावेन ज्ञान संरक्षितं भवेत् ॥ ६२८ ॥ तपस्त्वं योगभूमीनां देवत्वाद्याप्तिहेतुतः । तद्धेतुत्वं भगवता वसिष्ठेनापि दर्शितम् । अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ॥ ६२९ ॥

इत्यादि विमूढो ब्रह्मणः पथि इत्यादि संसिद्धौ कुनन्दन ॥

एकामथ द्वितीयां च तृतीयां भूमिकामुत । आरूढस्य मृतस्याऽथ कीदृशी भगवन्गतिः ॥ ६३० ॥ योगभूमिकयोत्का तु जीवितस्य शरीरिणः । भूमिकांशाऽनुसारेण क्षीयते पूर्वदुष्कृतम् ॥ ६३१ ॥ ततः सुरविमानेषु लोकपालपुरेषु च । मेरुपर्वतकुञ्जेषु रमते रमणीसखः ॥ ६३२ ॥ ततः सुकृतसम्भाराद्दुष्कृते च पुराकृते । भोगक्षये परिक्षीणे जायन्ते योगिनो भुवि ॥६३३॥ शुचीनां श्रीमतां गेहे गुप्ते गुणवतां सताम् । तत्र प्राग्वासनाभ्यस्तं योगभूमिक्रमं बुधाः ॥६३४॥ स्पृष्ट्वा परिपतन्त्युच्चैरुत्तमं भूमिकाक्रमम् । तत्त्वज्ञानात्पूर्वभाविभूमिकात्रितयस्य तु ॥ ६३५ ॥ सिद्धे तपस्त्वे किं वाच्यं भूमिकात्रयरूपिणः । असम्प्रज्ञातयोगस्य तपस्त्वं योगिसंमतम् ॥ ६३६ ॥ मनसश्चेन्द्रियाणां चैवैकाग्र्यं परमं तपः । तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥ ६३७ ॥ अनेन तपसा ज्ञानी न प्राप्नोति पराभवम् । तथापि क्रियते लोकसंग्रहार्थं मनीषिभिः ॥ ६३८ ॥ गीतायामत एवोक्तं श्रीकृष्णे-

नाऽर्जुनं प्रति । लोकसंग्रहमेवापि संपश्यन् कर्त्तुमर्हसि ॥९३९॥ शिष्यो भक्तस्तटस्थश्च संग्राह्यस्त्रिविधः स्मृतः । अन्तर्मुखेन गुरुणा योगिना कथिते सति ॥ ९४० ॥ तत्त्वे श्रद्धां परां भक्तिं संप्राप्य सहसा मनः । शिष्यस्य तत्त्वे विश्रान्तिं परां प्राप्नोत्यनुत्तमाम् ॥ ९४१ ॥ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ ९४२ ॥ अन्नप्रदानवसतिप्रभृत्या योगिनं प्रति । सेवमानो भक्तलोकस्तदीय तु तपो ऽश्नुते ॥ ९४३ ॥ तस्य पुत्रा दायमिति श्रूयते स्मर्यते ऽपि च । प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ॥९४४॥ विसृज्य ध्यानयोगेन ब्रह्माप्येति सनातनम् । तटस्थो द्विविधः प्रोक्त आस्तिको नास्तिकस्तथा ॥ ९४५ ॥ सन्मार्गाचरणं दृष्ट्वा योगिनः स्वयमास्तिकः । सन्मार्गएव वर्त्तेत सर्वदा स्मर्यते तदा ॥ ९४६ ॥ यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥ ९४७ ॥ नास्तिको योगिवर्येण दृष्टः पापाद्विमुच्यते । यस्याऽनुभवपर्यन्तं बुद्धिस्तत्त्वे प्रवर्त्तते ॥ ९४८ ॥ तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वपातकैः । सर्वप्राण्युपकारित्वं योगिनः परिपठ्यते ॥ ९४९ ॥ कुलं पवित्रं जननी कृतार्था विश्वम्भरा पुण्यवती च तेन । अपारसच्चित्सुखसागरे ऽस्मिन् लीनं परे ब्रह्मणि यस्य चेतः ॥ ९५० ॥ न केवलं योगिना ऽस्य शास्त्रीयं तप उच्यते । किं त्वस्य लौकिकः सर्वव्यवहारो ऽपि तद्भवेत् ॥ ९५१ ॥ इत्य तस्यैवं विदुषो यज्ञस्येति श्रुतौ श्रुतम् । जीवन्मुक्तेस्तपोरूपं द्वितीय फलमीरितम् ॥ ९५२ ॥ जीवन्मुक्तेर्विसंवादविरहः फलमुच्यते । लोके कलहरूपश्च निन्दारूपश्च संमतः ॥ ९५३ ॥ विसंवादो द्विधा तत्र कलहः क्रोधमूलकः । योगिना तु सह क्रोधरहितेन

महात्मना ॥ ९५४ ॥ कथं नाम क्रोधयुक्ते लौकिकः कलहायते । अतिवादांस्तितिक्षेत नाऽवमन्येत कं चन ॥ ९५५ ॥ न चेमं देहमाश्रित्य वैरं कुर्वीत केन चित् । निन्दारूपो द्वितीयोपि निन्द्यत्वाऽदर्शनात्कुतः ॥ ९५६ ॥ यं च सन्तं न चाऽसन्तं नाऽश्रुतं न बहुश्रुतम् । न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ॥ ९५७ ॥ योगी तु तैर्थिकैः सार्कं शास्त्रमेव विसंवदेत् । तैर्थिको योगिचरिते विसंवाद करोति वा ॥ ९५८ ॥ शास्त्रप्रमेयशब्देन मेयं कीदृशमुच्यते । परशास्त्रप्रमेयं स्वशास्त्रमेयमुतोच्यते ॥ ९५९ ॥ नाद्यो युक्तस्तमेवैकं जानथेति श्रुतेर्वशात् । नापि स्वशास्त्रमेयं वा प्रतिवाद्यग्रयो वदेत् ॥ ९६० ॥ पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः । का कथा विजिगीषायाः कथाया योगिनस्तदा ॥ ९६१ ॥ अष्टाङ्गमाचरन् योगी सर्वेषामेव संमतम् । सर्वोपि तैर्थिको योगिचरिते न विसंवदेत् ॥ ९६२ ॥ स्वस्वशास्त्रप्रमेयेषु विवादे सम्भवत्यपि । मोक्षसाधनरूपस्य यमाद्यष्टाङ्गकस्य तु ॥ ९६३ ॥ योगस्यैकविधत्वेन संमतत्वान्न चेतरः । यस्येदं जन्म पाश्चात्त्यं तमाश्वेव महामते । विशन्ति विद्या विमला मुक्ता वेणुमिवोत्तमम् ॥ ९६४ ॥ आर्यता हृद्यता मैत्री सौम्यता मुक्तता ज्ञता । समाश्रयन्ति तं नित्यमन्तःपुरमिवाऽङ्गनाः ॥ ९६५ ॥ पेशलाऽऽचारमधुर सर्वे वाञ्छन्ति तं जनाः । वेणुं मधुरनिध्वानं वने वनमृगा इव ॥ ९६६ ॥ सुषुप्तवत्प्रशमितभाववृत्तिना स्थितः सदा जाग्रति येन चेतसा । कलान्वितो विधुरिव यः सदा बुधैर्निषेव्यते मुक्त इतीह स स्मृतः ॥ ९६७ ॥ मातरीव शमं यान्ति विषमाणि मृदूनि च । विश्वासमिह भूतानि सर्वाणि

शमशालिनि ॥ ९६८ ॥ तपस्विषु बहुज्ञेषु याजकेषु नृपेषु च । बलवत्सु धनाढ्येषु शमवानेव राजते ॥ ९६९ ॥ तस्मादेवं हि मननं जीवन्मुक्तेः प्रयोजनम् । विसंवादाऽभावरूपं तृतीयं कथितं मया ॥ ९७० ॥ इहलोकोद्भवात्सौख्याद्दुःखाच्च व्यतिरिक्तयोः। पारलौकिकयोः सौख्यं दुःखयोरुभयोरपि ॥९७१॥ तत्कारणे पुण्यपापे श्रौतस्मार्त्तादिलक्षणे । तच्चिन्तारूपदुःखस्य निवृत्तिमपि चाऽब्रुवन् ॥ ९७२ ॥ किमहं साधु नेत्याद्याः श्रुतयः स्मृतयस्तथा । पञ्चमं तत्फलं वच्मि सुखाऽऽविर्भावलक्षणम् ॥ ९७३ ॥ त्रिधा सुखाऽविर्भावो ऽयं सर्वकामाप्तता तथा । कृतकृत्यात्मता प्राप्तप्राप्तव्यत्वमितीरितम् ॥ ९७४ ॥ सर्वकामाप्तता यत्र त्रिविधा परिकीर्त्तिता । सर्वेषु साक्षिता कामाहतता सर्वभोक्तृता ॥ ९७५ ॥ ब्रह्मादिषु स्थावरान्तेष्वनुस्यूतं चिदात्मकम् । तद्ब्रह्माऽस्मीति विज्ञानं स्वदेहपरदेहयोः ॥ ९७६ ॥ सर्वसाक्षित्वमस्तीति तदेव तदवाप्तता । इममर्थमभिप्रेत्य सोऽश्नुतेति श्रुतिर्जगौ ॥ ९७७ ॥ यथा लोके भुक्तभोगेष्वकामहतता तथा । ज्ञानिनः सर्वभोगेषु दोषदृष्ट्या विरागिणः ॥ ९७८ ॥ सर्वत्राऽकामहतता सर्वकामाऽप्तिलक्षणा । अत एवाऽनन्दवल्ल्यां श्रोत्रियस्येति च श्रुतम् ॥९७९॥ सद्रूपाऽऽनन्दरूपेण सर्वत्राऽवस्थितं समम् । स्वाऽऽत्मानमनुसन्धाय सर्वभोक्तृस्वरूपता ॥ ९८० ॥ इममर्थमभिप्रेत्य त्वहमन्नमिति श्रुतिः । तथैव कृतकृत्यत्वं विदुषो योगिनः श्रुतम् ॥ ९८१ ॥ ज्ञानाऽमृतेन तृप्तस्य कृतकृत्यस्य योगिनः । नैवाऽस्ति किंचित्कर्त्तव्यमस्ति चेन्न स तत्त्ववित् ॥ ९८२ ॥ यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ ९८३ ॥ प्राप्ताऽप्राप्तव्यपेतस्य जीवन्मुक्तिम-

योजनम् । अभयं वै ब्रह्म वेदेत्येवमाद्या श्रुतिर्जगौ ॥ ६८४ ॥ दुःखहानिः सुखाऽवाप्तिर्ज्ञानादत्र तु लभ्यते । जीवन्मुक्तेः फलत्वेन नाऽर्हतोत्राऽभिधीयते ॥ ६८५ ॥ तत्त्वज्ञानं यथापूर्वमुत्पन्नं रक्षितं भवेत् । एवं सुरक्षितत्वेन तयोस्तत्फलता भवेत् ॥ ६८६ ॥ तस्मादुक्तप्रमाणेन तार्किको बोधितो ऽनिशम् । ता एता भूमिकाः प्राप्य स्वात्मारामो विराजते । एवमुक्तप्रकारेण विश्रान्तस्वान्त आत्मदृक् ॥ ६८७ ॥ आहैकया मे मनसो न वृत्तिर्विश्वं न जाने महदद्वये वा । अवेदिषं नाऽहनि दृश्यजालं तद्वासनायाः प्रसरः कुतो मे ॥ ६८८ ॥ देहः पतत्वद्य युगान्तरे वा पतन्तु तस्मिन्गिरयो ऽशनिर्वा । तच्छेषभूता विलयं प्रयान्तु का वा क्षतिर्नो वडवामुखाऽग्नौ ॥६८९॥ त्यजत्वनन्तः क्षितिमम्बुराशौ मुञ्चन्तु तोयं भुवि सप्त मेघाः । उन्मीलयत्वेष ललाटनेत्रं भस्मास्तु विश्वं मम किं पुरारिः ॥ ६९० ॥ क्षितिः स्फुटत्वद्य नभः पतत्वधः चलन्तु शैलाः सवितापि शीतलः । चन्द्रो ऽपि तीक्ष्णो ऽस्तु दिवा निशा तथा रात्रिश्च घस्रो ऽहमविस्मयी त्वतः ॥ ६९१ ॥ त्यक्तोदयो दिनमणिर्हिमरश्मिरस्तु रूक्षश्च शीतपवनः प्रतिवातु नित्यम् । शुष्यन्तु वारिनिधयो न दिशन्तु भिक्षां जल्पन्त्वसाधुवचनानि जना न कम्पे ॥ ६९२ ॥ एवं निर्वासनं कालं निरन्तरमतन्द्रितः । नयेत्संवत्सरात्पूर्वं तृप्यन्ते सर्ववासनाः ॥६९३॥ पश्यन्तु मद्ब्रह्मसुखाऽनुभूतौ संदग्धचित्ताः शपथं कृतं मे । गृह्णामि दोर्भ्यामुरगेन्द्रजिह्वां पिबामि हालाहलमित्यहं सुखम् ॥ ६९४ ॥ दधाति तप्तं परशुं कराग्रे नक्रेन्द्रवक्त्रे च शिरः क्षिपामि । किं चिन्न मत्तः परिशुद्धभूम्नो वस्त्वस्ति कालत्रितये ऽप्यहं सः ॥ ६९५ ॥ निःसंशयं ब्रह्म नि-

रस्तभेदं पश्यन्तु लोकाः शपथं क्षणेन। आयान्तु यस्यास्ति विभेदबुद्धिः सम्भूय मे ऽग्रे शपथं करिष्ये ॥ ९९६ ॥ तस्मा-द्युक्तमकारेण विश्रान्तस्वान्त आत्मदृक्। कोपि योगी परान-न्दस्वानुभूतिं प्रगायति ॥ ९९७ ॥ प्रत्यग्दृशि यदध्यस्तं तद्वि-ज्ञानात्पलायते। यदतो न स आनन्दः परिपूर्णकलानिधिः। हृदयव्योम्नि संशुद्धे प्रावृडन्ते हिमांशुवत् ॥ ९९८ ॥ आ-विर्भूतो हृदयजलजं तोषयन्वर्धयन् स प्रेमाऽम्भोधिं विमल-धिषणान् मोदयन्नस्ततृष्णान्। अन्तर्बाह्यं समरसतया भ्राज-यन् राजते यः सो ऽहं राजा विगतकलुषो लौकिकादन्यच-न्द्रः ॥ ९९९ ॥ वृद्धो ऽक्षय्यो दिवि निशि सदा भूतले ब्र-ह्मलोके विष्वग् मेरोरुपरि तदधो दृश्यजालाद्बहिश्च। वर्ते ऽनन्तो न जनिमृतिमान् निर्गुणो ज्योतिषां च ज्योतिश्चाऽन्य-स्तिमिरनिकराद्राजते पूर्णचन्द्रः ॥ १००० ॥ एतच्छैत्यं सकल-समये मोददं स्वात्मभूतं नष्टद्वैतं स्वपरविकलं सर्वभूतेः प्रदातृ। दुःखाऽतीतो निखिलजगतां कारणं नास्ति तस्य कार्यं हेतुर्भ-पदविधुरो राजते ऽखण्डचन्द्रः ॥ १००१ ॥ सृष्ट्यग्रे यः प-रसुखवपुः शान्तरूपः सदा ऽऽसीद् भूयः सृष्ट्वा सुरनरखगै-र्भिन्नमण्डं ततश्च। तद्रक्षार्थं परमकरुणो विश्वमन्तः प्रविष्टो धत्ते ऽन्तेपि प्रहसितमुखः शान्तमायेशचन्द्रः ॥ १००२ ॥ स-र्वप्राणान् युगपदधिपः प्रेरयन् स्वस्वकार्ये तत्तद्देवान् निखि-लफलवित् क्षेत्रतन्मानिनौ च। कूटस्थः सन्नमलसुदृशा वीक्ष्यते तैरसङ्गः सत्तामात्रः सविखनखगो दीप्यते साक्षिच-न्द्रः ॥ १००३ ॥ यो दुर्ज्ञेयो गतगुणगणः स्वैः स्वयं तान्य-बुध्यत् सत्यज्ञानो बहुसुखधनश्चेतसः सर्ववृत्तीः। जानंस्तासा-मुदयलयदृग् भासते प्रत्यगात्मा स्वात्मारामो यमिकुवलयं

बोधयन् स्वाऽऽत्मचन्द्रः ॥ १००४ ॥ यः स्वाज्ञानान्नरसुरतनोः स्थावरं नारकं च बिभ्रद्देहं स्वजनपशुषु स्वात्मतां योजयित्वा । नष्टप्रायो गुरुनरभयैर्बन्धजैर्मुह्यमानः शोचन्दुःखान् भ्रमति सततं शोभते जीवचन्द्रः ॥ १००५ ॥ यस्याङ्घ्रिपङ्कजप्रपतनवशात्कस्य चित्पुण्यराशेः सत्त्वे शुद्धे स्फुरति सदयः पूर्णरूपः परात्मा । तस्मिन्काले किमपि परमाऽऽनन्दमात्रे च तिष्ठन् सोऽयं भूमा वरतरपदो वर्धते मुक्तचन्द्रः ॥ १००६ ॥ एवमानन्दमानेन सिद्धः को ऽपि विराजते । परमाऽऽनन्दपीयूष भजंस्तृप्तो दिवानिशम् ॥ १००७ ॥ सर्वत्यागाद् ज्ञापयेच्च स्वात्ममात्रमिदं जगत् । शिष्यते हि स्वतन्त्रो ऽयं लोकाऽनुग्रहकाम्यया ॥ १००८ ॥ गृह्णीयात्प्राणमात्रार्थं न गृह्णीयाच्च राजवत् । आहिताग्नि यथा काम्यं कुर्यात्कामनया स तु ॥१००९॥ कामनायां निवृत्तायां न कुर्याद्योज्यतां तथा । उपेक्षते कदा चिच्च देहं वृषभयोगिवत् ॥१०१०॥ नोपक्षक उपेक्ष्यं वा ग्राह्यं स्याद् ग्राहकं तथा । तद्दृष्ट्या भिन्नदृष्टीनां सर्वं स्याद्देहमानिनाम् ॥ १०११ ॥ स्वच्छन्दवर्तिनस्तस्य मुक्तमत्तगजस्य च । शृङ्खला केन दीयेत तस्याऽसङ्गपरात्मनः ॥ १०१२ ॥ आत्मैव सर्वमिदमस्य विकारजालं मृत्स्नेव कुम्भविकृतिः कटकं सुवर्णम् । माला फणीव निजहेतुमतत्त्व एव स्वाऽज्ञानमूमखिलं मयि तत्त्वतो न ॥ १०१३ ॥ कृतकृत्यो ऽस्मि धन्यो ऽस्मि पूर्णानन्दोऽस्मि भूमनि । नृत्यन् गायन् परानन्दं न जाने स्वसुखाऽवधिम् ॥१०१४॥ अहो भाग्यमहो भाग्यमहो गुरुरहो गुरुः । अपाङ्गलेशात्तीर्णो ऽयं भववारां निधिर्मया ॥ १०१५ ॥ अहो शास्त्रमहो शास्त्र यद्वाक्यलवलेशतः । दुःखसंस्रतिदावाग्निर्विज्ञानेन पदा जितः ॥ १०१६ ॥ अहो नारायणः शम्भुरहो हैयङ्गवीनमुत । यत्प्रसादादिदं सर्वं तत्त्वं पद्मभूरपि ॥१०१७॥

न वेत्ति किं सुरा मर्त्यास्तृष्णार्त्तिवशगाः किमु । इत्येवं मननं कुर्वन्नटव्यामात्मवान् कविः ॥ १०१८ ॥ अवधूतमार्ग-भौमो भूमौ शमविरतियोषिद्भिः । काननवृन्दे क्रीडन् विलसति करिणीभिरिव द्विरदेन्द्रः ॥ १०१९ ॥ श्रीशप्रेरणया ऽय योगनिद्रोद्भूतवृत्तान्तः । गीतो मया मुमुक्षून् प्रति निखिलाम्नायसंग्रहः स्वच्छः ॥ १०२० ॥ नत्वा गुरुपदपद्म लब्धेशाङ्घ्रिसरोरुहशुद्धाङ्गः । श्रुत्वा ऽत्र ग्रन्थममुं लोका ब्रह्माऽमृतं पिबत ॥ १०२१ ॥ अग्रे स्थाणोरमृतमभय स्वात्मतत्त्वं निशायां संस्मृत्यैतत् सुखमयतया तिष्ठता दृष्टमित्थम् । भर्तुर्लक्ष्म्याः पदनतिमनु श्रीगुरोर्द्वैतिभिश्च संवादो मे चितिरहमिदं सर्वमेवेति दृष्टिः ॥ १०२२ ॥ दृष्टः स्वप्नो लिखित इह मे ग्रन्थतः प्रेरणातः पत्युः काश्याः पदजलरुहे भक्तिमद्भिः सुगेयम् । पेयं ब्रह्मामृतमिदमिहाऽमुत्र सौख्यप्रदं स्याद्दद्याद्दिव्यां श्रियमपि यशः शृण्वते मुक्तियुग्मम् ॥ १०२३ ॥ श्रीगुरुः परमात्मैव नानामूर्त्तिधरः प्रभुः । ब्रह्मविद्यागुरुत्वे हि विभाति परमेश्वरः ॥ १०२४ ॥ क्व ग्रन्थकरणं क्व त्वमिति मा जानताऽऽस्तिकाः । गुरोरनुग्रहः किं किं न करोत्येवमाह वाक् ॥ १०२५ ॥ मूकं करोति वाचालमिति लोके ऽस्ति डिण्डिमः । यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ १०२६ ॥ क्वाहं क्व ग्रन्थकरण किं तु येषां प्रसादतः । मुक्तः स्यां श्रीगुरुश्रीशवेदान्तास्ते गिरा ऽर्चिताः ॥ १०२७ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमत्सर्वेश्वरानन्दतीर्थ-
पूज्यपादशिष्यजयकृष्णब्रह्मतीर्थविरचितं
ब्रह्मामृतं सम्पूर्णम् ॥

———